THE

PRINCESS OF WALES

SARASWATI BHAVANA TEXTS

*No 62.*

# NRISIMHA PRASĀDA

## TĪRTHA SĀRA

GOVERNMENT SANSKRIT LIBRARY,

BENARES.

Price, Rs. 1-8-0]

THE

PRINCESS OF WALES

SARASWATI BHAVANA TEXTS

*No. 62.*

---

EDITED BY

GOPI NATH KAVIRAJ, M. A.

---

THE

# NRISINHA PRASĀDA

## TIRTHA SĀRA.

---

*Printed by R. M. Palsule,*

*Sangved Vidyalaya Press, Benares City.*

---

*Published under the authority of the Government of the U. P. by the Superintendent, Govt. Printing & Stationery, Allahabad.*

---

1930.

❀ ओः ❀

# नृसिंहप्रसादे

## तीर्थसारः

दलपतिराज विरचितः



वाराणसीस्थराजकीय महाविद्यालयाध्यापकेन न्यायव्याकरणाचार्य-
मीमांसाशिरोमण्याद्युपाधिभूषितेन शुक्लोपाह्व-
पण्डित सूर्यनारायण शुक्लेन संशोधितः

---

THE

# NIRSINHA PRASĀDA

## TĪRTHA SĀRA.

BY

DALAPATI RAJA.

*Edited with Introduction, etc.*

BY

SŪRYA NĀRĀYAṆA ŚUKLA,

Nyāya Vyākaraṇāchārya Mimānsā Śiromaṇi,

*Assistant Professor, Govt. Sanskrit College, Benares.*

---

1936.

# तीर्थसारस्य सूचीपत्रम्—










श्रीविश्वेश्वरः शरणम् ।

# तीर्थसारस्य भूमिका-

अथेदानीमस्यामेव ग्रन्थमालायां समुपक्रान्तमुद्रणस्य महतो धर्मशास्त्रनिबन्धस्य क्रमेण संस्कारसारः आह्निकसारः श्राद्धसारः कालनिर्णयसारः व्यवहारसारः प्रायश्चित्तसारः कर्मविपाकसारः व्रतसारः दानसारः शान्तिसारः तीर्थसारः प्रतिष्ठासारः इत्येवं द्वादशप्रकरणात्मकस्य नृसिंहप्रसादाख्यस्य तृतीयपञ्चमषष्ठप्रकरणमुद्रणानन्तरमेकादशं तीर्थसाराख्यं प्रकरणं संमुद्र्य तीर्थदर्शनार्थिनां सौकर्याय श्रीमतां करकमलयोरुपायनीक्रियते ।

एतस्य रचयिता आन्ध्रब्राह्मणः शुक्लयजुर्वेदीयकण्वशाखीयो भारद्वाजगोत्रो गोदावरीपरिसरस्थग्रामाभिजनः १४९० ई० तः १५०८ ई० वर्षपर्यन्तं स्थितवतः श्रीनिजामशाह महीभृतः करणाधीश्वरपदाध्यक्षः श्रीवल्लभपण्डिततनूजन्मा श्रीसूर्यपण्डितस्य शिष्यो वैष्णवः श्रीदलपतिमहाराजो नामेति एतद्ग्रन्थस्थैः पद्यैर्निश्चीयते ।

एतत्संपादनार्थं यतमानस्य मे वाराणसेयराजकीयसंस्कृतमहाविद्यालयाध्यक्षैर्महामहोपाध्याय पण्डितप्रवर प्राच्यप्रतीच्योभयदर्शननिष्णातैः श्रीगोपीनाथकविराज एम, ए महोदयैः सरस्वतीभवनपुस्तकालयाद्दापितं १५६८ वैक्रमवत्सरीयवैशाखशुक्लरविवासरान्वितद्वितीयातिथौ लिखितं चिरन्तनमेकमेवादर्शपुस्तकमवलम्बनमभूत् । तदपि स्थलविशेषे लुप्ताक्षरं सन्दिग्धाक्षरं चेत्यस्य संपादने महत्कष्टमनुभूयापि सर्वथाऽशुद्धिरहितं कर्तुं नाशकम् ।

इदं च पुस्तकं कदाचित् सुगृहीतनामधेय नन्दपण्डितापराभिधान धर्माधिकारिविनायकपण्डितस्य पितृचरणानां रामपण्डितानां कदा-

चिच्च कस्यचित् गोपीनाथनाम्नः पण्डितस्य आधिपत्ये गतमभूदिति दानसाराद्यपृष्ठे 'रामपण्डितानाम्' इति, व्रतसारान्ते 'इदं पुस्तकं धर्माधिकारि वासुदेवस्य' इति, तीर्थसारस्याद्यपृष्ठे 'गोपीनाथजी पण्डितीयं पुस्तकम्' इति लेखदर्शनादवगम्यते ।

अस्मिंश्च तीर्थसाराख्ये प्रकरणे दक्षिणदेशस्थानि तीर्थानि केवलं पुराणवचनोद्धरणेन वर्णितानि इति सेतुबन्धरामेश्वरादितीर्थदर्शनार्थिनां कृतेऽयं तीर्थसारोऽतीवोपयुज्यते इति वस्तुस्थितिकथनमात्रम् ।

अस्य ग्रन्थस्य ग्रन्थकर्तुश्च विषये इदमीयप्रायश्चित्तसारप्रकरणभूमिकायां जयपुरराजकीयसंस्कृतपाठशालाध्यापक साहित्याचार्य श्रीनन्दकिशोरशर्मभिर्बहु निरूपितमिति तत्रैव द्रष्टव्यमिति न मया पिष्टं पिष्यते ।

एतत्प्रकरणं श्रीवाराणसेयराजकीय संस्कृतमहाविद्यालयाध्यक्षाणां प्राच्यप्रतीच्योभयदर्शननिष्णातानां महामहोपाध्याय पदवीभूषणानां पण्डितप्रवर श्रीगोपीनाथ कविराज एम, ए, महोदयानां मयि सर्वथा वत्सलां दृष्टिमादधतामादेशेन संपाद्य तदीयकरकमलयोरुपहारीकरोमि ।

सूर्यनारायण शुक्लः,
काशी ।



श्रीदलपतिमहाराजविरचितो

# नृसिंहप्रसादः ।

## तीर्थसारः ।

---

### अथ सेतुबन्धमाहात्म्यम् ।

तत्र प्रशंसा स्कन्दपुराणे—

श्रीरामवाक्यम् ।

एष सेतुर्मया बद्धः सागरे लवणाम्भसि ।
तव हेतोर्विशालाक्षि नलेन तु सुदुष्करः ॥
सेतुबन्ध इतिख्यातस्त्रैलोक्येनैव पूजितः ।
यतस्तत्तीर्थमतुलं महापातकनाशनम् ॥
तत्र गत्वा द्विजान्पूज्य याति विष्णोः परं पदम् ।
सेतुसंस्मरणान्नित्यं महापातकनाशनम् ।
विष्णोः संस्मरणे तुल्यमित्याहुर्ब्रह्मवादिनः ॥

ब्रह्माण्डपुराणे—

समर्थे निर्मिते सेतौ मुक्तिमार्गप्रदर्शने ।
दत्वा पापं व्युदस्याशु विष्णोःसायुज्यमाप्नुयात् ॥

तत्र स्नानं महापुण्यं सामुद्रमपि दुर्लभम् ।
सर्वदा मुनिशार्दूल सुरैरिन्द्रादिकैरपि ॥
दशयोजनविस्तीर्णं शतयोजनमायतम् ।
सेतुं दृष्ट्वा मनुष्याणां मुक्तिमार्गो न दुर्लभः ॥

गारुड़पुराणे—

रामपादाम्बुजन्यासपवित्रं नलनिर्मितम् ।
सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्याम्व्यपोहति ॥
मुच्यते सर्वपापेभ्यः कृतकृत्यो भवेन्नरः ।
सेतुमध्ये तु यत्तीर्थं पर्वते गन्धमादने ॥
स्नात्वा पिण्डप्रदानेन पूजयेद्द वृषभध्वजम् ।
दर्शनात्स्पर्शनाच्चैवं सर्वपापैः प्रमुच्यते ॥
यो नरः स्नाति तीर्थेऽस्मिन् सामुद्रे सेतुबन्धने ।
उपोष्य रजनीमेकां राहुग्रस्ते दिवाकरे ॥
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥

पद्मपुराणे--

हतलङ्केश्वरं रामं निवृत्तं स्वां पुरीं प्रति ।
इदं विभीषणो वाक्यं प्रत्युवाच कृताञ्जलिः ॥
करिष्ये सर्वमेतद्धि यदाज्ञप्तं विभो त्वया ।
सेतुनानेन राजेन्द्र पृथिव्यां सर्वमानवाः ॥
आगम्य प्रतिबाधेयुर्ज्ञात्वा ते च कथंचन ।
के तु मे नियमादेव किन्तु कार्यं मया विभो ॥

श्रुत्वैतद्राघवो वाक्यं रक्षसा तेन भाषितम् ।
कार्मुकं गृह्य हस्तेन रामः सेतुं द्विधाच्छिनत् ॥
विमानस्थोऽतिवेगेन मध्ये वै दशयोजनम् ।
तत्रान्तर्योजनं चैकमेव खण्डत्रयं कृतम् ॥
वेलावनान्तमासाद्य रामः पूजामुमापतेः ।
कृत्वा रामेश्वरं नाम्ना देवदेवं त्रिलोचनम् ॥
प्रतिपिच्याथ वचनं बभाषे रघुनन्दनः ।
दक्षिणाम्भोनिधिं चैव मागमन्मे प्रजातयः ॥
एवं च प्रतिपिद्ध्वा तु तं च देवमपूजयत् ।
अन्तरिक्षाद्विभोर्वाणी मेघगम्भीरनिस्वना ॥

रुद्र उवाच—

भोभो राघव भद्रन्ते स्थितोऽहं साम्प्रतं तटे ।
यावज्जगदिदं वीर यावदेषा धरा स्थिता ॥
यावदेव च ते सेतुस्तावत्स्थास्यामि राघव ।

तथा—

भो भो राघव भद्रन्ते ध्रुवं यत्त मनोगतम् ॥
यावदेव प्रयच्छामि नाम्ना देवं समाहितः ।
पुष्कराक्ष महाबाहो देवदेव सनातन ।
भवान्वै नारायणोऽसि गृहे मानुषयोनिषु ॥
अवतीर्णो देवकार्यात् कृतं तच्च त्वयाऽनघ ।
इदानीं व्रज नः स्थानं पूतं कार्यं हि शत्रुहन् ॥

त्वया कृतमिदं स्थानं मदीयं रघुनन्दन ।
महापातकयुक्तानां तेषां पापं विनश्यति ॥
ब्रह्महत्यादिपापानि कष्टात्कष्टानि कर्हिचित् ।
दर्शनादेव नश्यन्ति नात्र कार्या विचारणा ॥

अथ रामेश्वरोत्पत्तिः—

विष्णुपुराणे—

भीमं प्रत्याह हनुमान् वृत्तान्तं कथयामि ते ।
पाण्ड्यदेशेऽतिविमले ख्यातो रामेश्वरेति च ॥
नित्यं सन्निहितस्तत्र वरोऽयं तन्मया वृतः ।
एवमस्त्विति दत्वाऽसौ वरं रामाय शंकरः ॥
पश्यतो राघवस्याग्रे तत्रैवान्तर्धीयत ।
ततो मामत्र शिखरं रामः प्रास्थापयत्परम् ॥
लिङ्गं मणिमयम्मेरोः शीघ्रमानय मारुते ।
इति रामस्य वचनादहं मेरुं समागतः ॥
त्वरितं तु समागम्य गृहीत्वा शिवलिङ्गकम् ।
एतस्मिन्नन्तरे रामो वालुकाभिः समुद्यतः ॥
पिण्डयित्वा मुहूर्तेन शिवलिङ्गमिति व्यधात् ।
ततः सा वालुका लिङ्गे वज्रीभूतासि ? पाण्डव ॥
लिङ्गाकारममापैतु ? यदद्याप्यद्भुतं महत् ।
अथ लिङ्गं मणिमयं गृहीत्वा मेरुतस्त्वहम् ॥
आगत्य व्रीडितः शोचन्रामाग्रेऽस्थामवाङ्मुखः ।
अभिप्रायं तु मे बुद्ध्वा रामो मामब्रवीत्तदा ॥

परिश्रमो महातेजो हनुमन्नभवत्तव ।
मद्वाक्यान्मेरुगमनं पुनरागमनं ततः ॥
हनुमन्मारुतसम व्यर्थस्तेऽयं श्रमोऽभवत् ।
वालुकाभिर्मया लिङ्गं मुहूर्तेन प्रतिष्ठितम् ॥
उत्पाटयैतत्तरसा त्वल्लिङ्गं स्थापये ततः ।
इतिं रामेण चादिष्टः सिकतालिङ्गपाटने ॥
पुच्छेनाकृष्य हस्तैश्च तं चालयितुमारभे ।
तल्लिङ्गमुत्पाटयितुं नाशकं वै कृतं बलात् ॥
न्यपतं भुवि चाशक्तो वक्त्राद्रुधिरमुद्वमन् ।
भ्रमन्तं धरणी पृष्ठे वमन्तं रुधिरं मुहुः ॥
विषेदुर्वानराः प्रेक्ष्य रामश्चाथाब्रवीच्च तान् ।



अशरीरिणी वागुवाच—

सुस्थितं दुःस्थितं वापि शिवलिङ्गं न चालयेत् ॥
चालयन्भयमाप्नोति हनुमानिव वानराः ।
कृतघ्नःस्वर्णस्तेयी च ब्रह्मघ्नो गुरुतल्पगः ॥
सुरापस्य च पापं तु नश्यतीश्वरदर्शनात् ।
अशरीरिवचः श्रुत्वा रामः कमललोचनः ॥
शिवं सन्निहितं ज्ञात्वा मां स्पृष्ट्वाऽऽश्वास्य पाण्डव ।
अयोध्यां गन्तुमारेभे स्वसैन्यपरिवारितः ॥
विमानमधिरुह्यैव स्थाप्य शंकरपुष्यकम् ।
पाण्ड्यदेशेऽति विमले स्थितं रामेश्वरं हरम् ॥

दृष्ट्वा स्वर्गमवाप्नोति यदि स्यात्पापकृत्तमः ।
रामेश्वरं सेतुबन्धे सोमेशं च सुराष्ट्रके ॥
गोकर्णे पशुपं दृष्ट्वा किमतः परितप्यसे ।
सूर्ये गृहे नरो याति यो रामेश्वरमाह्निकः ? ॥
सोमे गृहे सोमनाथं तत्र स्नात्वा दिवं व्रजेत् ।
महापातकदोषेभ्यः स्नानान्मुक्ता दिवं व्रजन् ॥
कुरुक्षेत्रसमं दानं भीम रामेश्वरं व्रजेत् ।
इति रामेश्वरोत्पत्तिर्मया तुभ्यं निवेदिता ॥

कूर्मपुराणे—

सेतुमध्ये महादेवमीशानं कृत्तिवाससम् ।
स्थापयामि सलिङ्गञ्च पूजयामास राघवः ॥
तस्य देवो महादेवः पार्वत्या सह शंकरः ।
प्रत्यक्षमेव भगवान् दत्तवान् वरमुत्तमम् ॥
ये त्वया स्थापितं लिङ्गं द्रक्ष्यन्तीह द्विजातयः ।
महापातकसंयुक्तास्तेषां पापं विनश्यति ॥
दर्शनादेव लिङ्गस्य नाशं याति न संशयः ॥
यावत्स्थास्यन्ति गिरयो यावदेषा च मेदिनी ।
यावत्सेतुश्च तावच्च स्थास्याम्यत्र तिरोहितः ॥
स्नानं दानं तपः श्राद्धं भविष्यत्तत्कथं ? नृणाम् ।
स्मरणादेव लिङ्गस्य दिनपापं प्रणश्यति ॥
इत्युक्त्वा भगवान् साधुं परिष्वज्य च राघवम् ।
सनन्दी सगणो रुद्रस्तत्रैवान्तरधीयत ॥

अग्निपुराणे—द्वादशाब्दानुक्रमे—

तत्र त्रयोदशे वर्षे दत्वा गोवर्म (कर्ण)गोशतम् ।
रामसेतुमथो दृष्ट्वा देवं रामेश्वरं हरम् ॥
विरूपमोचने तीर्थे स्नानं कृत्वा यथाक्रमम् ।
तत्र शुद्धिर्भवत्येव ब्रह्मघ्नानां नचाऽन्यथा ॥

इतिसेतुबन्धमाहात्म्यम् ।

## अथपुण्डरीकक्षेत्रमाहात्म्यम् ।

तत्रप्रशंसा कूर्मपुराणे—

पुण्डरीकं महातीर्थं ब्राह्मणैरुपसेवितम् ।
तत्राभिगम्य युक्तत्मा पुण्डरीकफलं लभेत् ॥

स्कन्दपुराणे—

स्कन्द उवाच ।

माहात्म्यं कथितं सम्यङ्नदीनामुत्तमोत्तमम् ।
गङ्गादीनां मुनिश्रेष्ठाः किमन्यच्छ्रोतुमर्हथ ॥

ऋषय ऊचुः ।

सर्वश्रेष्ठं यदि क्षेत्रं तीर्थं वा कुत्र विद्यते ।
उत्कृष्टं दैवतं वापि तन्नो वद महामते ॥

सूतउवाच ।

अगस्त्यादिमहर्षीणां वचः श्रुत्वा च षड्मुखः ।
ध्यात्वाथ विविधं क्षेत्रं तीर्थं देवं च दृष्टवान् ॥

स्कन्द उवाच ।

नाहं तथाविध क्षेत्रं तीर्थं दैवतमेव वा ।
ध्यायन्परमया भक्त्या सर्वोत्कृष्टं सुदुर्लभम् ॥
तदागच्छत गच्छामो गिरिजावल्लभं तव ।
प्रष्टुमेनं महाप्रश्नं कैलासनिलयं विभुम् ॥
आश्चर्यं तु ममाप्यत्र प्रश्नार्थावगमे महान् ।
जायते मुनिशार्दूल स हि नो वक्ष्यते शिवः ॥

सूत उवाच ।

इत्युक्त्वा मुनिभिः सार्धं जगाम शिखिवाहनः ।
ऋषीणां जगतां नाथ त्वत्प्रसादान्ममाधुना ॥
पुराणं कीर्तनं दिव्यं स्कन्दः परमपूजितम् ।
तीर्थानां महिमां श्रुत्वा क्षेत्राणां च तथा विभो ॥
प्रश्नाः कृताः दैवतानामेभिर्मुनिभिरव्ययम् ।
सर्वोत्कृष्टं यदि क्षेत्रं तीर्थं वापि महत्फलम् ॥
तादृग्विधं दैवतं च विद्यते तद् ब्रवीहि नः ।

अथतीर्थोत्पत्तिः—

शङ्कर उवाच ।

इदानीममुमेवार्थं मात्रा पृष्टोस्मि तेऽनघ ।
वक्ष्यामि शृणु धर्मज्ञ पुत्रोऽसि प्रिय इत्युत ॥

अतीव गुह्यं तत्क्षेत्रं नास्तिकेभ्यः कदाचन ।
न शठेभ्यो दाम्भिकेभ्यो न पापेभ्यश्च सुन्दरि ॥
उाद्दश्य कर्मबाह्येभ्यो न वक्तव्यं परं हि तत् ।
भैम्याश्चैव तटे देवि दक्षिणे तीर्थमुत्तमम् ॥
अस्ति क्षेत्रं दैवतश्च स वै कृत्स्नं सुदुर्लभम् ।
धर्मरी(वी)रा नदी यत्र करवीरकुशाङ्कुशैः ॥
शोभिता संगता भैम्या तस्माद्योजनमात्रतः ।
पौण्डरीकमितिख्यातं तत्तीर्थं क्षेत्रपूजितम् ॥
पाण्डुरङ्गश्च तत्रास्ते मूर्तिमान् देवतोत्तमः ।

तथा—

पुष्करात् त्रिगुणं प्रोक्तं केदारात् षड्गुणं भवेत् ॥
वाराणस्या दशगुणमनन्तं श्रीगिरेरिति ।
तत्र स्थित्वार्चयेद्देवं प्रीत्या सुरनमस्कृतम् ॥
षष्ठिवर्षसहस्राणि दिव्यदैवतदर्शनात् ।
यत्फलं लभते मर्त्यः सर्वदैव हि तत्फलम् ॥
दुर्लभं मानुषं जन्म तत्राप्यश्वत्थसेवनम् ।
तथा च मातृशुश्रूषा जराजन्मविनाशिनी ॥
दुर्लभा खलु मर्त्यानां तं दृष्ट्वा सोऽत्र दुर्लभः ।
सिक्तप्रमाणमप्यन्नम् तस्मिन्क्षेत्रे ददाति यः ॥
तदेव मेरुणा तुल्यमक्षय्यं फलं लभेत ।
रेणुप्रमाणं स्वर्णं वा रजतं वा स्वशक्तितः ॥
अस्मिन्क्षेत्रे तु यो दद्यात्सोनन्तफलमश्नुते ।

कथं प्रबलबन्धस्तु ? (शरत्)काले प्रयच्छति ॥
आयुरारोग्यमैश्वर्यं कीर्तिं च लभते तु सः ।
देवाश्च जन्म वाञ्छन्ति कर्मभूमौ सुरेश्वरि ॥
अस्मिन्क्षेत्रे तु यो दद्यात्सोनन्तफलमश्नुते ।
सकृद्वा पौण्डरीकस्थं विष्णुं द्रक्ष्याम इत्युत ॥
पितॄनुद्दिश्य यत्किंचिद्दीयते च यथा तथा ।
श्राद्धं वारि नरस्तेषां कृतं चाप्यक्षयं भवेत् ॥
मोदन्ते पितरस्तस्य नृत्यन्ति च पितामहाः ।
अपि नः स कुले यायात् पौण्डरीकं व्रजेत्तु यः ॥
धान्यप्रभृतिमप्यत्र यो ददाति द्विजातये ।
अग्निष्टोमफलं प्राप्य मोदते दिवि मानवः ॥
श्रोत्रियं च दरिद्रं च विद्वांसं च कुटुम्बिनम् ।
यःपुष्णाति सदा विप्रं सो ऽश्वमेधं दिने दिने ॥
तैरर्चितैः क्षेत्रमूर्तिरर्चितः स्यान्न संशयः ।
वसन्ते देवदेवेशं विमलैः कुसुमैः शुभैः ॥
संपूज्य चन्दनैर्गन्धैः फलैर्नैवेद्यमोदकैः ।
दत्वा सत्कृत्य विप्रान्यो पूजयेद्विधिवन्नरः ॥
इष्टान् कामानिह प्राप्य सायुज्यं लभते ध्रुवम् ।
ग्रीष्मे महाभिषेकैश्च मुकुलैर्मल्लिकादिभिः ॥
क्षीरस्नानैः प्रशस्तैश्च कर्पूरैश्चारुचन्दनैः ।
अनुलेपैर्मौक्तिकैश्च वस्त्रैः रम्यैः सुशोभनैः ॥
पूर्वोक्तैरुपहारैश्च पूजनञ्च यथाविधि ।

तदेव फलमाप्नोति वर्षास्वपि शृणुष्व मे ॥
अक्षोटकैः प्रशस्तैश्च शतपत्रैः सुशोभनैः।
कुङ्कुमैरनुलेपैश्च रक्तवस्त्रैश्च भामिनि ॥
तैलपक्वैः पूरिकाभिर्लड्डुकैरतिशोभितैः।
भक्ष्यैरन्यैस्तैलपक्वैर्बहुगव्यघृतैरपि ॥
संपूज्य च प्रणम्यात्र सर्वान्कामानवाप्नुयात्।
हेमन्ततौ घृतस्नातैः पुष्पैस्तात्कलिकैः शुभैः ॥
रक्तमाञ्जिष्ठकैश्चैव कुसुमैरनुलेपनैः।
पूर्वोक्तैरुपहारैश्च पूज्य नत्वा च भक्तितः ॥
सर्वान् कामानिह प्राप्य सायुज्यं लभते नरः।
शिशिरे देवदेवेशं स्नानैराभ्यङ्गकैरपि।
रक्तवस्त्रैः समं वस्त्रैर्वस्त्रैः कार्पासिकैरपि।
उपहारैः प्रियै रत्नैर्नानारत्नसमन्वितैः ॥
संपूज्य प्राप्नुयात्कामान् सायुज्यञ्च न संशयः।
देवस्य परितः पञ्चत्रिंशद्धस्तप्रमाणतः ॥
क्षेत्रमूर्तिः प्रयत्नस्यायोज्य भोग्यं परं हि तत्।
उच्छिष्टादीनि तत्रैव न कार्याणि कदाचन ॥
कुर्वन्नरकमाप्नोति यावदाभूतसंप्लवम्।
सर्वोत्कृष्टं च यत्तीर्थं मूर्तिश्चैव सुरेश्वर ॥
अद्य नागं परं विद्या सर्वकामफलप्रदम्।
उच्छिष्टादीनि तत्रैव न कार्याणि कदाचन ॥
शौचादीन् वर्जयेत् तत्र न कुर्यात्तु कथंचन।

कुर्वंश्च महदाप्नोति किल्बिषं नात्र संशयः ॥
तत्र मध्ये पातयति तस्य पूजा च निष्फला ।

इतिपुण्डरीकक्षेत्रप्रशंसा ।

अथतीर्थोत्पत्तिः—

तथा—

अष्टाविंशतिमे कल्पे द्वापरान्ते च षण्मुख ।
पुण्डरीक इति ख्यातस्तपस्तेपे सुदुष्करम् ॥
पुष्करिण्यास्तटे कृत्वा आश्रमं सुरपूजितम् ।
भक्त्या पित्रोश्च शुश्रूषां कुर्वन्मुनिवरः सदा ।
तस्यैवं कुर्वतः पूजां पित्रोरहरहःप्रिये ॥
परितुष्टोऽभवद्देवो गोपीजनमनः प्रियः ।
गोवर्धने गिरौ रम्ये चारयन्गोगणं विभुः ॥
स्मृत्वा ऋषिमथाभ्यागाद्वरं दातुं सुरेश्वरः ।
गोयष्टिं धारयन् यत्नाद्वेत्रोद्वेल्लितकङ्कणः ॥
माकरौ कुण्डलौ गण्डे शुशुभाते विराजितौ ।
नानारत्नप्रभोद्भासिशक्तिमौलिविराजितः ॥
चारुपद्मेक्षणः श्रीमान् ललाटेक्षणशोभितः ।
सुनासोदारहासश्च कुन्तल्यालिविराजितः ॥
पद्मकेन च वर्हेण श्रीवत्सं धारयन्प्रभुः ।
अतीव सुन्दरः सौम्यो रत्नाङ्कितमहाङ्गदः ॥
दिव्यस्रग्वीति सौम्येन शुद्धसूत्रेण वेष्टितः ।

निवृत्तेनानुकल्पेन कटिसूत्रविराजितः ॥
कटिमालम्ब्य तिष्ठन्वै त्रिवृद्वल्या च संयुतः ।
कुल्लकाशिकनद्धाभ्यामूरुभ्यां चातिशोभितः ।
यो गोयष्टिप्रान्तमाक्रम्य द्व्यरुभ्यां मोहयन्निव ॥
तं दृष्ट्वा स ऋषिर्देवि बभूवानन्दनिर्भरः ।
पुण्डरीकः सुरेशस्य चारुतामाश्रयन्निव ॥
चक्षुरन्तःप्रवेश्यैनं हृदि कृत्वा मुहुर्मुहुः ।
लिहेय मूर्ध्नि जिघ्रेयमिति व्याकुलतां ययौ ॥
तस्य तद्भावमाज्ञाय पाण्डुरङ्गो हसन्निव ।
इदमूचे वचस्तत्र कारुण्येनावलोकयन् ॥

श्रीभगवानुवाच ।

आगतोऽहं वरान्दातुं प्रीत्या च मुनिसत्तम ।
पित्रोराराधनात्तस्मात्प्रसन्नोऽस्मि न संशयः ॥
इत्युक्ते देवदेवेन ततो नत्वा सुरेश्वरः ।
अर्चित्वा विष्णुमीशानं तुष्टाव गरुडध्वजम् ॥

पुण्डरीक उवाच ।

जय जय जगन्नाथ महाविष्णो सुरेश्वर ।
भक्तानां देवदेवेश प्रणतार्तिविनाशन ॥
व्यक्ताव्यक्तस्वरूपस्त्वं विश्वरूपनिरञ्जन ।
गुणाकर गुणाधार निर्गुणात्मन्नमोस्तुते ॥
त्राहि मां देवदेवेश कृपया भक्तवत्सल ।

यदि प्रसन्नो भगवान् ब्रह्मार्चितपदाम्बुजः ॥
अनेनैव स्वरूपेण त्वया स्थेयमिह प्रभो ।
मन्नाम्नैतद्भवेत् क्षेत्रं विष्णो तत्सुरपूजितम् ॥
भुवि मुक्तिप्रदं नृणां सर्वक्षेत्रोत्तमं भुवि ।
तीर्थं वापि तथा देव सर्वतीर्थोत्तमं भवेत् ॥
मूर्त्या त्वा यामि देवेश सर्वदेवोत्तमोत्तम ।
वस्तव्यं चैव कारुण्यादिहैव सततं विभो ॥

श्रीभगवानुवाच ।

एवमस्त्विति वत्स्यामि तव प्रीत्या मुने सदा ।
अत्रैव तीर्थमध्ये च तव नामाङ्किते द्विज ॥
भीमस्वेदसमुद्भूता भैमी भगवतः प्रिया ।
प्रीत्यावगत्य तत्क्षेत्रं तीर्थं च प्लावयिष्यति ॥
सर्वोत्तममुनिश्रेष्ठाः पश्चिमा मुखतस्तथा ।
गुप्तश्च प्रकटश्चाहमत्रव(त्स्या)च्यामि सुव्रत ॥

शंकर उवाच ।

एवं तस्मै वरान् दत्वा तत्रैव स्थितवान् हरिः ।
मध्येतीर्थं च विलसद्रत्नोज्ज्वलितपीठके ॥
पुण्डरीकेण च तथा क्षेत्रपालेन संयुतम् ।
अर्धयोजनविस्तारं तदर्धायामसंमितम् ॥
तत्क्षेत्रं सर्वफलदं विष्णोर्मम च वल्लभम् ।

इति पुण्डरीकक्षेत्रोत्पत्तिः ।

अथ विशेषतीर्थानि—

तत्क्षेत्रे देव पुरतः क्षेत्रपालस्तु पूजितः ॥
अध्यास्ते प्रथमं पुम्भिर्द्रष्टव्यः फलकाङ्क्षिभिः ।
पूर्वद्वारे स्थिता देवी ब्रह्मपत्नी वरप्रदा ॥
द्रष्टव्या पूजनीया च नमस्कार्या विशेषतः ।
दशाक्षरस्य मन्त्रस्य मूर्तिः सा परमेश्वरी ॥
केवलं पूजिता नृणामभीष्टफलदायिनी ।
सिद्धानामीश्वरो देवो दक्षिणद्वारमाश्रितः ॥
विष्णुना स्थापितं प्रीत्या नारदो लिङ्गमूर्तिना ।
दक्षिणेऽवतु मुद्राङ्को नमस्कार्यः प्रयत्नतः ॥
षडक्षरेण मन्त्रेण पूजितःसर्वसिद्धिदः ।
विष्णुप्रिया महात्मानो दिव्यास्तत्र समासते ॥
पञ्चकोट्यः समाख्याता नीराजनकृतोद्यमाः ।
भूम्यामतःसुरेशानि विष्णुमाराधयन्ति ताः ॥
अद्यापि च सकृद्भूमौ भूपस्य प्रतिदृश्यते ।
विष्णुक्रीडनकं स्थानं नानैश्वर्ययुतं हि तत् ॥
हरिणा क्रीडितं देवि क्रीडन्त्यमरवल्लभाः ।
आपादौ तत्र संल्लग्नौ शिलापृष्ठेऽथ पूजितौ ॥
नत्वा पूजां ततः कृत्वा नैवेद्यैश्च यथाविधि ।
लभते सकलान् कामान् सायुज्यं च न संशयः ॥
सिञ्चनक्रीडनादीनि तत्र सन्तीति भामिनि ।
दध्नोतनैस्तेन पक्वैः ? शार्दूलक्रीडनादिभिः ॥

पश्चिमे तु स्थिता देवी द्वारे भुवनपूजिता ।
एकाक्षरस्य मन्त्रस्य मूर्तिः सा परमेश्वरी ॥
उत्तरद्वारमाश्रित्य दुर्गा भगवती स्थिता ।
महिषासुरान्तकरिणी सर्वसिद्धिप्रदायिनी ॥
दशाक्षरस्य मन्त्रस्य मूर्तिः सा परमेश्वरी ।
द्वाराण्येतानि चत्वारि तथा द्वारस्थदेवताः ॥
प्रेक्षितान्येव पूज्यानि यथोक्तफलमिच्छता ।
साक्षरश्चैव चिह्नैश्च तत्रास्ते भगवान् हरिः ॥
त्रिमूर्तिः पूजनीया च तत्रास्ते भगवान् हरिः ।
नान्यक्षराणि देवेशि दिव्यो मन्त्र उदाहृत ॥
कालत्रये त्रिवर्णस्य गायत्री च सुरेश्वरी ।
त्रिमूर्तिःपूजनीया च त्रिभिर्मन्त्रैः सुरारिहा ॥
कुल्लकानांवशिक्यंतत् ? भिन्नपत्रापि दृश्यते ।
क्षेत्रात्मा चैव तीर्थात्मा मूर्त्यात्मेतित्रिधा स्थिताः ॥
क्षेत्रे तीर्थे च भूमौ च पूज्या सा चाक्षयो भवेत् ।
क्षेत्रस्थभूसुरैश्चैव पूजितैः पूजितो भवेत् ।
देवस्य पश्चिमे भागे पद्मतीर्थे सुशोभने ॥
धनुःशतप्रमाणेन सर्वपापप्रणाशने ।
अश्वत्थरूपिणौ देवौ प्रणताभीष्टदायकौ ॥
तत्र स्नानं तर्पणञ्च परमं पावनं स्मृतम् ।
तिस्रःकोट्यो महाभागा देव्यस्तत्र समासते ॥
नीराजनादृताः सर्वा वैष्णव्यो विष्णुवल्लभाः ।
ऐशान्यां देवदेवेशः शतहस्तप्रमाणतः ॥

कुण्डलाख्यं महातीर्थं तत्र तिष्ठस्यत्पतौ यम ?।
भूता तले शिला तत्र रत्या न्त्रिसौ च कुण्डलौ ॥
देवदेवेन तन्नाम्ना ख्यातिमाप जगत्त्रये।
अश्वत्थरूपो नृहरिस्तत्रास्ते जनवन्दितः ॥
सुमन्त्राराधितो नृणां सर्वसिद्धिप्रदायकः।
स्नात्वा तत्र सकृन्मर्त्यस्तर्पयित्वा पितॄँस्तथा ॥
नत्वा तु नृहरिं भक्त्या वाजिमेधफलं लभेत्।
त्रिंशद्धस्तप्रमाणेन तीर्थं प्राकृतमुत्तमम् ॥
पुण्यावती नदी पश्चात्तस्योपरि समागता।
तत्र स्नानं च दानं च राजसूयफलं लभेत् ॥
देवस्य पश्चिमे भागे त्रिंशत्कोट्यस्तु पूजिताः।
देवस्य पश्चिमे भागे पञ्चहस्तप्रमाणतः ॥
तावत्यो युवत्यः सन्ति देव्यो विष्णुप्रियाः प्रिये।
नीरासनरताः सर्वाः सर्वलोकेषु पूजिताः ॥
ययावेव वरं देव त्वत्समीपे वसाम्यहं।
पादौ तु सुन्दरौ देवसमचित्तहराविमौ ॥
मत्करैः पीडितावेतौ वस्त्रालाञ्छितचिह्नितौ।
एवमेवास्तु ते सर्वं मुक्तकेशीति संज्ञिके ॥
नग्ना विस्रस्तकवरी वत्स्यसि त्वं विभूषिता।
तथा लब्धवरा देवी आस्ते सर्वाङ्गशोभना ॥
ईशानतो वै क्षेत्रस्य चरन्तीव वरानना।
साद्यापि दृश्यते पुम्भिः पुण्यकृदभिर्वरप्रदा ॥

शंकर उवाच ।

वचनात्तस्य तत् क्षेत्रमासवयं ( विपुलं ) तदा ।
तत्राद्यं नरसिंहाख्यं तीर्थं परमपूजितम् ॥
तत्रास्ते नरसिंहाख्यो हरिण्यकशिपो रिपुः ।
द्वात्रिंशद्भुजसंयुक्तो नृसिंहाख्यः सुरारिहा ॥
त्रिंशद्धनुः प्रमाणेन तीर्थं ब्रह्मादिसेवितम् ।
तत्र स्नात्वा चाश्वमेधफलमाप्नोति मानवः ॥
अगस्त्यमितिविख्यातं तीर्थमृषिभिराश्रितम् ।
सप्तसप्ततिहस्तान्ते स्नानाचद्वत्फलं लभेत् ॥
मूलमध्ये लिङ्गमूर्तिरगस्त्येन सुपूजितः ।
अहं तिष्ठामि देवेशि सर्वकामफलप्रदः ॥
गाणपत्यं ततः पूर्वतीर्थं विघ्नविनाशनम् ।
यत्रागत्य जगन्नाथं गोपालं बनमालिनम् ॥
तन्मत्रम्यागतं ? प्राप्य स्थितः तत्र गणाधिपः ।
तत्र स्नात्वा जगन्मर्त्यो विघ्नान् बहु विघातयेत् ॥
ततः पूर्वे महातीर्थं सङ्कर्षणमुदाहृतम् ।
तीर्थयात्रां प्रकुर्वाणो दत्त्वा देवं हली तदा ॥
प्रत्यक्षरूपिणं देवं पाण्डुरङ्गमयाचत ।
ददामीति वचसा वरमेदतदयाचत ॥
मन्नाम्ना तद्भवेत्तीर्थं स्नानात्सायुज्यदायकम् ।
एवमस्त्विति तस्योक्त्वा तत्रैवान्तरधीयत ॥
तत्र स्नात्वा च पीत्वा च सायुज्यं लभते हरेः ।

ततः पूर्वन्तु जावालितीर्थं पापप्रणाशनम् ॥
जबालिस्तु तपस्तप्त्वा सिद्धिं यत्राप सुव्रत ।
तत्र स्नानादतिरात्रफलमाप्नोति मानवः ॥
ततोऽप्यनन्तरं प्रोक्तं ब्रह्मतीर्थं सुदुर्लभम् ।
आराधयन् देवदेवं यत्रास्ते कमलोद्भवः ॥
शतहस्तप्रमाणेन सर्वसिद्धिप्रदं नृणाम् ।
सकृत् स्नात्वा च पीत्वा च वाजिमेधफलं लभेत् ॥
ततोप्यनन्तरं प्रोक्तं कलशं तीर्थमुत्तमम् ।
सहस्रहस्तमानं च तद्विष्णोः परमं पदम् ॥
तत्र स्थिताऽमृता देवी सम्यक् पूज्या सुरेश्वरी ।
ब्रह्मतीर्थं च कलशं मोक्षदं तु पदं स्मृतम् ॥
ततो दक्षिणतः प्रोक्तं पितृतीर्थं सुदुर्लभम् ।
सप्तहस्तप्रमाणं तु पितृणां वल्लभं मतम् ॥
तत्र पिण्डप्रदानंहि गङ्गा (गया) याश्च शताधिकम् ।
यत्राराध्य महाविष्णुं गोपालं गोपवल्लभम् ॥
जगन्नाथस्य देवस्य वसु निलयमागताः ।
शङ्खतीर्थं चक्रतीर्थं पद्मतीर्थं च शोभते ॥
राजते कौमुदीतीर्थं ततो दक्षिणतः शुभम् ।
सर्वतीर्थोत्तममिदं तीर्थं त्रैलोक्यपूजितम् ॥
पौण्डरीकं सुरेशानं दर्शनान्मोक्षदं नृणाम् ।
स्नानं दानं जपो होमः सर्वं तत्र प्रशस्यते ॥
दश (हस्त) व्यामप्रमाणं तद्विष्णोस्तनुरुदाहृतः ।

ततो मुक्तकसंज्ञं तु तीर्थं दक्षिणतः प्रभो ॥
तत्र स्नात्वा च पीत्वा च ब्रह्मभूयाय कल्पते ।
सङ्गमाख्यं महादैत्यं पातयित्वा मुरारिहा ॥
तस्योपरि च श्रीपादौ कृत्वा विष्णुरधिष्ठितः ।
अद्यापि तत्र सलग्नौ दृश्येते श्रीपदौ विभोः ॥
महोत्साहं तु कुर्वाणो देवदेवस्य सुव्रते ।
अनन्तफलमाप्नोति सायुज्यं तु न संशयः ॥
तन्नाम्ना चैव तत्तीर्थं स्नानात् सायुज्यदं नृणाम् ।
पुण्यावती नदी यत्र आगता लोकविश्रुता ॥
सङ्गमं तु महत् पुण्यं स तदार्यंयुतं प्रिये ।
तत्र स्नात्वा च दत्वा च पर्णदत्वं प्रपद्यसे ॥
सोमतीर्थं ततः पूर्वं देवानामपि दुर्लभम् ।
तत्र स्नात्वा सकृन्मर्त्यः सोमतीर्थं व्रजत्यतः ॥
तत्र स्नात्वा सकृन्मर्त्यः सूर्यलोकं व्रजत्यतः ।
ततः पूर्वं सरस्वत्यास्तीर्थं लोकेषु विश्रुतम् ॥
तत्र स्नात्वा च पीत्वा च तर्पयित्वा पितॄनथ ।
सर्वान्कामानिह प्राप्य ब्रह्मलोकं स गच्छति ॥
पूर्वद्वारं च देव्याश्च सरस्वत्याश्च पूजनम् ।
महोत्साहा महामोदो दानं चैव प्रशस्यते ॥
तत्रास्ते भगवान् विष्णुरद्याप्यश्वस्वरूपधृक् ।
तत्रानुष्ठानमात्रेण सर्वसिद्धिर्भवेद् ध्रुवम् ॥

एतत्ते कथितं देवि यत् पृष्टोऽहमिह त्वया।
क्षेत्रं तीर्थं दैवतं च सकृद् दृष्ट्वाप्यभीष्टदम्॥
महात्म्येतत्प्रयतः शृण्वतो भक्तितः सदा।
भवत्यभीष्टदा लक्ष्मीः कारुण्यान्नात्र संशयः॥

इतिपुण्डरीकक्षेत्रमाहात्म्यम्।

---

## अथामर्दकमाहात्म्यम्

तत्र प्रशंसा स्कन्दपुराणे—

श्रुतानि सर्वतीर्थानि चाश्रमाश्च द्विजोत्तम।
दण्डकस्य च माहात्म्यं तन्मे विस्तरतो वद॥
आमर्दकं तु यत्तीर्थं सर्वपापौघनाशनम्।
महात्म्यं च मुनिश्रेष्ठ याथातथ्याद् वदस्व मे॥
त्यक्त्वा सर्वाणि तीर्थानि योगाभ्यासरतः सदा।
आमर्दके कुतस्तीर्थे सदा सन्निहितो हरः॥

मार्कण्डेय उवाच।

प्रीतोऽस्मि तव राजेन्द्र कथयामि न संशयः।
युगे युगेऽस्य माहात्म्यमुत्पत्तिं शंकरस्य च॥
आमर्दयानि पापानि तस्मादामर्दकं मतम्।
एतत्तीर्थवरं ख्यातं त्रिषु लोकेषु भारत॥
वाचिकैर्मानसैश्चापि शारीरैश्च विशेषतः।
कीर्तनात्तस्य तीर्थस्य मुच्यते सर्वपातकैः॥

इदं तीर्थं च राजेन्द्र गयातीर्थशताधिकम् ।
अस्मिन् तीर्थे तु यः स्नात्वा उपवासपरायणः ॥
दीक्षामन्त्रविहीनोऽपि मुच्यते सर्वकिल्बिषैः ।
पञ्चक्रोशप्रमाणं तु तत्र तीर्थे महीपते ॥
भुक्तिमुक्तिप्रदं दिव्यं प्राणिनां पापकर्षणम् ।
कृते ज्योतिर्मयाख्यं च त्रेतायां मुक्तिसंज्ञकम् ॥
द्वापरे स्पर्शसंज्ञं च कलौ नागेश्वरः स्मृतः ।
दर्शनात्स्पर्शनाच्चैव सेवनात्पूजनात्तथा ॥
मुनिभिस्तुल्यतां यान्ति नराः सत्यं युधिष्ठिर ।
न तच्छ्रेयोऽग्निहोत्रेण नाग्निष्टोमेन कल्पते ॥
यच्छ्रेयः प्राप्नुवन्त्यत्र मानवा लिङ्गपूजने ।
देवदानवयक्षाश्च गन्धर्वोरगराक्षसाः ॥
सर्वे देवत्वमायान्ति तत्र लिङ्गप्रसादतः ।
यत्फलं भूमिदाने तु सद्योयज्ञेषु यत्फलम् ॥
तत्फलं तत्र लिङ्गस्य पूजनादिषु सिद्धये ।
केचित्कुटुम्बिनस्ते च चिन्तया परिपीडिताः ॥
न पश्यन्ति जगन्नाथं देवदेवं नरे ( गे ) श्वरम् ।
रक्षकैस्तत्र देवेन निमित्तैर्विघ्नकारकैः ॥
पुण्यधर्माश्च ये मर्त्याः स्नानं तेषां च जायते ।
विभेद्य विघ्नसंघातं पश्यन्ति च नगेश्वरम् ॥
विमुक्ताः सर्वपापैस्ते गच्छन्ति शिवमन्दिरम् ।
त्रिविधं पुरुषं ध्यात्वा स्नानं कुर्याद्यथाविधि ॥

दशाक्षरेण मन्त्रेण लिङ्गात्पूतं जलं पिवेत् ।
केदारे च यथापीतं जलं कुण्डेषु पार्थिव ॥
पञ्चरेफ-समायुक्तं क्षकारत्रयभूषितम् ।
अकाराभ्यां समायुक्तमेतद्गुह्यं प्रकीर्तितम् ॥
अत्र प्रस्तार्केदारमाहात्म्येन कृतव्ययः ॥
तिलंमिश्रेण तोयेन तर्पयेत्पितृदेवताः ।
पुरुषांस्तारयेच्चैव दश पूर्वान् दशापरान् ॥
अक्लेशाददते दानं काञ्चनं गां महीं तिलान् ।
आसनोपानहौ शय्यां वरां रुरुत्रिकं तथा ॥
वस्त्रयुग्मं च विप्राय श्रद्धापूर्वं प्रयत्नतः ।
लाङ्गलं चैव यो दद्यादुक्षाणं च खुरं धराम् ॥
आत्मानं तोलयेद्यस्तु लवणै रत्नकाञ्चनैः ।
पृथिव्यां यानि वस्त्राणि तुलां कुर्यात्सनातनम् ॥
त्रयोदशगुणैरेकं त्रयोदशगुणं लभेत् ।
श्राद्धं कृत्वा गृहे भक्त्या शुचिश्चापि जितेन्द्रियः ॥
पुरं प्रदक्षिणीकृत्य सीमान्ते विसृजेत्ततः ।
वाग्यतः प्रव्रजेत्तावत् यावत्सीमा ह्यतन्द्रितः ॥
पञ्चस्थानेषु वै श्राद्धं हव्यकव्यादिभिः क्रमात् ।
पिण्डदानं तु यः कुर्यात् पायसैर्मधुसर्पिषा ॥
पितरस्तस्य नृत्यन्ति द्वादशाब्दानि पञ्च च ।
उपानहौ च यो दद्याद्‌ ब्राह्मणाय प्रयत्नतः ॥
स च स्वर्गमवाप्नोति अश्वारूढो न संशयः ।



अश्वं शय्यां च यो दद्यात् छत्रिकां च विशेषतः ॥
गच्छेद्विमानमारूढो गन्धर्वैः परिवारितः ।
उत्तमं च गृहं दद्यात्सप्तधान्यैश्च पूरितम् ॥
स्वर्गलोकं वसेत्सत्यं काञ्चने भवनेऽपि च ।
तिलधेनुं च यो दद्यात् सवत्सां तिलसंयुताम् ॥
नाकपृष्ठे भवेत्तावद्यावदाभूतसंप्लवम् ।
गृहे वा यदि वारण्ये तीर्थे वाथ तथा पथि ॥
तैयमत्र च यो ? दद्याद् यमलोकं न पश्यति ।
कथादानं च यः कुर्याद्वृषभं च समुत्सृजेत् ॥
तत्र चापि भवेत्तस्य यत्राहावेव ? नान्यथा ।
मधुमासे सिते ?पक्षे एकादश्यामुपोषितः ॥
निशाजागरणं कुर्याद्विष्णुपादसमीपतः ।
प्रदीपं धूपनैवेद्यैर्मालया चैव चन्दनैः ॥
अर्चां कुर्वीत यो विष्णोः पठेत् पौराणिकीं कथाम् ।
सर्वपापविनिर्मुक्तो. विष्णुलोकं स गच्छति ॥
उपहास्येन शाठ्येन पूजयेद्यो नगेश्वरम् ।
अश्वमेधसहस्रेण वाजपेयशतैरथ ॥
यत्फलं लभते प्राणी तन्नगेश्वरदर्शनात् ।
चतुर्दश्यां च वै स्नात्वा श्राद्धं कृत्वा यथाविधि ॥
पितरस्तस्य नृत्यन्ति द्वादशाब्दं न संशयः ।

अथ विशेषतीर्थानि ।

त्रयोदश्यां ततो गच्छेद् गुहावासी च तिष्ठति ॥

दृष्ट्वा मार्कण्डमीशानं मुच्यते सर्वपातकैः ।
तत्र स्नात्वा च यो भक्त्या उपवासपरायणः ॥
क्षपाजागरणं कृत्वा दद्याद् दीपं च यत्नतः ।
देवस्य स्नपनं कृत्वा जलैः पञ्चामृतैस्तथा ॥
समस्ते मेघया ! शक्त्या पूजां कृत्वा यथाविधि ।
सुशाखोत्थितमन्त्रैश्च जपं कृत्वा द्विजोत्तमः ॥
सावित्र्यास्तु सहस्रं तु जपेद् वक्तुं सनातनम् ।
अघोरं वा जपन्नित्यं क्रियां कृत्वा सनातनीम् ॥
नृत्यगीतविनोदेन स्तोत्रैर्जागरणं निशि ॥
दक्षिणां दिशमाश्रित्य पर्वते नीलसंज्ञके ।
अव्यक्तमर्चयेल्लिङ्गं योगाभ्यासरतो हरेः ॥
गुहामध्ये प्रविश्यैव ध्यानं कुर्यान्महेश्वरे ।
लिङ्गकोटिसहस्रस्य पूजयेच्चापि तत्फलम् ॥
अर्घं तत्र प्रकुर्वीत भद्रमुक्ताष्टमीदिने ।
विशेषाच्चैव मासीते पूजां कृत्वा विधिः स्मृतः ॥
धन्वन्तरशतेनापि ! नागनाथस्य सन्निधौ ।
कलौ तु पावनं तच्च पञ्चक्रोशप्रमाणतः ॥
विधिमन्त्रसमायुक्तस्तर्पयेत् पितृदेवताः ।
कुलानां तारयेद्विंशत् दशपूर्वान् दशापरान् ॥
दक्षिणायाञ्च मूर्तौ च शुचिर्भूत्वा समाहितः ।
न्यासं तु कृत्वा पूर्वोक्तं प्रदद्याद्देशपुष्पिका ॥
शास्त्रोक्तैरेभिर्मन्त्रमानसैश्चायुते यथा ।

छत्रमाभरणं दद्याद् धीमानुपानहौ तथा ॥
तेन पूजितमात्रेण पूजिताः पुरुषास्त्रयः ।
स्वर्गलोके वसेत्तात यावदाभूतसंप्लवम् ॥
लिङ्गस्य दक्षिणे कृत्वा पर्वतो भृगुसंज्ञकः ।
तस्य मूर्धनि यत्तीर्थं पुरा निपतितं भुवि ॥
विधानं शम्भुना साक्षात् चक्रतीर्थं तदिष्यते ।
मृतास्तत्रैव ये केचिज्जन्तवो भुवि पक्षिणः ॥
प्रयान्ति परमं स्थानं तत्र तीर्थे न संशयः ।
चूक्षतरशतं गच्छेद् भृगुरङ्ग-समीपतः ॥
यत्रापि तिष्ठते देवः सदाव्यक्तो महेश्वरः ।
कुण्डं तत्र तु विस्तीर्णं निर्मलं च सुशोभनम् ॥
वाष्कला च समासाद्य मुक्तिमार्गस्तथापरे ।
नालग्रीवं तु राजेन्द्र त्रयोनाम व्यवस्थितः ॥
तत्र सन्निहिते नित्यं भववाक्यं न संशयः ।
प्रदक्षिणं तु यः कुर्यात् पर्वतं भृगुसंज्ञकम् ॥
अष्टपर्वतमेकं च श्रीशैलं च नरोत्तमः ।
अश्वमेधसहस्रेण तत्फलं लभते नरः ॥
पर्वतादुत्तरे कूले नातिदूरे च पाण्डव ।
सर्वदा तिष्ठते शम्भुर्नात्र कार्य्या विचारणा ॥
कुण्डमध्ये यथेशानः पूर्वं तिष्ठति केशवः ।
दक्षिणे च चतुर्वक्त्रस्त्रिशत्क्रोध इतिस्थितः ॥
इदं तीर्थं तथा पुण्यं यथा पुण्यं गया शिरः ।

सकृत्पिण्डोदकेनैव नरो निर्मलतां व्रजेत् ॥
एकं गयाशिरो मुक्त्वा सर्वतीर्थानि शंकरः ।
लिङ्गभेदस्य तीर्थस्य कलां नार्हन्ति षोडशीम् ॥
कुण्डमेतेश्वराशाया दशहस्तप्रमाणतः ।
ऐन्द्रवारुणिकाष्ठायाः प्रमाणं चैव विंशतिः ॥
एतत्प्रमाणे तीर्थेऽपि पिण्डदानादिकर्मसु ।
जनाः पुण्याश्च ये मर्त्यास्तत्र दातुं लभन्ति ते ॥
विश्वस्तु पितृरूपेण ब्रह्मरूपी पितामहः ।
प्रपितामहश्चन्द्रोऽपि देवास्त्रिपुरुषाः स्थिताः ॥
जातं जातं निरीक्षन्ते स्वपुरे तत्र संस्थिताः ।
कदा पश्यामि तीर्थेऽस्मिन् कदास्मान् संतापयिष्यसि ॥
पञ्चस्नानेषु यच्छ्राद्धं कुरुते भक्तिमान्नरः ।
सकुलानि तु सर्वाणि प्रेतभूतानि तारयेत् ॥
आत्मसंहनना ये च गोब्राह्मणहताश्च ये ।
दंष्ट्रिभिर्जलपातेन विद्युत्पातेन ये हताः ॥
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया ।
तत्र तीर्थेषु यस्तेषां श्राद्धं कुर्याच्च शक्तितः ॥
मोक्षप्राप्तिर्भवेत् तेषां तत्स्थानेषु न संशयः ।
संन्यासं कुरुते यस्तु तत्र तीर्थे विधानतः ॥
ध्यायमानो महादेवं स गच्छेत् परमं पदम् ।
क्रीडयित्वा यथाकामं स्वेच्छया शिवमन्दिरे ॥
तत्र स्थाने महापुण्ये देवैरुत्पादितोप्ययम् ।

ततो देवनदीत्राता हिता एव नृपो भुवि ॥
यत्र सावर्णिता कुण्डे लिङ्गभेदे नराधिप ।
देवनद्यां प्रतीच्यां तु यत्र प्राची सरस्वती ॥
याम्यापालिङ्गभेदस्य तत्र तीर्थे नरोत्तमः ।
यत्र देवशिला पुण्या यच्च देवेन निर्मितम् ॥
तत्र स्नात्वा तु यो भक्त्या तर्पयेत् पितृदेवताः ।
पितरस्तस्य तृप्यन्ति द्वादशाब्दं न संशयः ॥
तत्र तीर्थे तु यो भक्त्या ब्राह्मणान् भजयेन् नृपः ।
स्वल्पेनैव तु दानेन तस्य चान्तो न विद्यते ॥
धनुर्दण्डसहस्राणां स्नानं यो नियतं चरेत् ।
तर्पयित्वा पितृन्देवान् पूजयेत्परमेश्वरम् ॥
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति नान्यथा ।
पातालान्निस्सृता गङ्गा स्मृता भोगवती इति ॥
निष्क्रान्ता लिङ्गभेदेन , सर्वपापक्षयंकरी ।
या सा सर्वेण विषये बहुपुण्या महानदी ॥
दृश्यते कुण्डमध्यस्था त्रयलिङ्गं त्रिशूलिनः ।
ब्रह्मणा च पुरा राजन्ननुदयादशस्मृती ? ॥
स तत्र दृश्यते तात प्राचीनाथविमोचनी ।
शातितत्रितयं यत्र शिला निर्वाणसंज्ञिता ॥
देवस्य पश्चिमे भागे दशहस्तप्रमाणतः ।
तत्र श्राद्धं प्रकुर्वीत यदि त्वा दानमोचनम् ? ॥
यस्तत्र भक्तिभावेन लिङ्गतोयं पिबेद्यदि ।

स मुच्येत्सर्वेभ्यः पापे कञ्चुकेन फणी यथा ॥
अनिन्द्यान् भोजयेद् विप्रान् कामक्रोधविवर्जितान् ।
त्रयोदशीदिने दानं त्रयोदशगुणं भवेत् ॥
अभ्यर्चितं जगन्नाथमज्ञानाश्वं गजाननम् ।
प्रतीचीं दिशमाश्रित्य यो दृष्ट्वा क्षेत्रकेवलम् ॥
पूजयेत् परया भक्त्या शूलपाणिं नगेश्वरम् ।
देवस्य पूर्वदिग्भागे उमां संपूजयेत् ततः ॥
हरितीर्थं ततो गच्छेन् मुच्यते सर्वपातकैः ।
दक्षिणायां समासाद्य पर्वते नीलसंज्ञिते ।
गुहामध्ये प्रविश्याथ जपेत् सूक्तं त्रियम्बकम् ॥
पञ्चवक्त्रा तु या नित्यं गुहासन्निहितो जपन् ।
यः स्मरेन्नागनाथं तु त्रिकालं नित्यमेव च ॥
स पूतश्च भवेत् साक्षात् स बाह्याभ्यन्तरे नृप ।
नश्यते नालिङ्गं तु भक्ततीर्थाच्छताधिकम् ॥
जलं दृष्ट्वा नरश्रेष्ठा मुक्तिं यान्ति नरोत्तमाः ।
त्रेतायां स्पर्शमात्रेण द्वापरे स्नानतस्तथा ॥
कलौ तु सेवया राजन् मुक्तिरेषा सनातनी ।
तस्यैवोत्तरकाष्ठायां देवदेवो जगद्गुरुः ॥
ज्योतिर्लिङ्गं प्रतिष्ठाय पूज्य चात्मानमात्मना ।
वृत्तितीर्थेषु तत्तीर्थं सर्वतीर्थमयं परम् ॥
उपद्रवन्ति विघ्नास्तु यस्तत्र स्थातुमिच्छति ।
त्रयोदश्यां चतुर्दश्यां प्रदोषे शिवदर्शनात् ॥

सोमवारव्रतैस्तैस्तैः शिवसायुज्यमश्नुते ।
रोगिणां परिचर्याभिः सन्नदानजपादिना ॥
वाचाह्निकैस्तत्र कृतैः शिवसायुज्यमाप्नुयात् ।
एतत् सर्वं मयाख्यातं यत् पृष्टं हि त्वया नृप ॥
दण्डकस्य च महात्म्यं तीर्थानामुद्भवस्तथा ।
आमर्दकप्रभावोऽपि विस्तरात् कथितस्तथा ॥
इदं यः श्रावयेद्भक्त्या पुराणं पापनाशनम् ।
यः शृणोति नरो वापि तस्य कोटिगुणं फलम् ॥

इत्यामर्दकमाहात्म्यम् ।

---

## अथ गयामहात्म्यम् ।

तत्र गयाक्षेत्रप्रशंसा महाभारते—

महानदीवेदनद्योस्तार्दयतीर्थाद्यनन्तरम् ।
उदध्यत्नानन्दाया गया मध्ये प्रकीर्तिता ॥
पञ्चक्रोशं गयाक्षेत्रं क्रोशमात्रं गयाशिरः ।
महानद्याः पश्चिमेन यावद् गृध्रेश्वरो गिरिः ॥
उत्तरे ब्रह्मयूपस्य यावद् दक्षिणमानसे ।
एतद् गयाशिरो नाम त्रिषु लोकेषु विश्रुतम् ॥

शिवपुराणे(१)—

सनत्कुमार उवाच ।

धन्यस्त्वमेव द्विजवर्यमुख्य
यद्वेदवादाभिरतः पितॄँश्च ।

---

(१) आदर्शपुस्तके मावराणे इति पाठः ।

प्रीणासि मन्त्रव्रतजप्यहोमै-
र्गयां समासाद्य तथान्नपिण्डैः ॥
शृणुष्व वाक्यं नृपतिर्बभूव
विशालनाथोऽत्र पुरीं विशालाम् ।
उवास धन्यो धृतिमानपुत्रः
स्वयं विशालाधिपतिर्द्विजाग्र्यान् ॥
पप्रच्छ पुत्रार्थममित्रहन्ता
तं ब्राह्मणाश्चोचुरदीनसत्त्वाः ।
राजन् पितॄंस्तर्पय पुत्रहेतो-
र्दत्वा गयायां विधिवत्तु पिण्डान् ॥
ध्रुवं सुतस्ते भविता नृवीर :
सहस्रदाता सकलक्षितीशः ।
इतीरितो ब्राह्मणसत्त्वोऽसौ
राजा विशालाधिपतिः प्रपन्नान् ॥
समागतस्तीर्थवरं द्विजेश
गयामिमां संयतमानसस्सन् ।
आगत्य सोऽथ प्रवरे सुतीर्थे
गयाशिरोयागपरः पितॄणाम् ॥
पिण्डप्रदानं विधिना प्रयच्छन्
यावद्द्विजानुत्तमसूर्तियुक्तान् ।
पश्यन्स पुंसः सितकृष्णरक्ता-
नुवाच राजा किमिदं भवद्भिः ।

समीक्ष्यते शंसत सर्वमेव
कुर्वन् हि मे मनसि प्रवृत्तम् ॥
कीकटेषु गया पुण्या पुण्यं राजगृहं वनम् ।
विषयं पावनं पुण्यं नदी यत्र पुनः पुनः ॥
यत्र शम्भोर्भगवतश्चरणस्तु प्रतिष्ठितः ।
पितॄणामक्षया तृप्तिस्तत्र पिण्डप्रदानतः ॥

कूर्मपुराणे—

गयाशीर्षं परं गुह्यं पितॄणाञ्चापि वल्लभम् ।
कृत्वा पिण्डप्रदानं तु न भूयो जायते नरः ॥
सकृद्गयाभिगमनं कृत्वा पिण्डं ददाति यः ।
तारिताः पितरस्तेन यास्यन्ति परमां गतिम् ।
गयाभिगमनं कर्तुं यः शक्तो नाभिगच्छति ॥
शोचन्ति पितरस्ते वै वृथा तस्य परिश्रमः ।
गयां यास्यति यः कश्चित्सोऽस्मान्संतारयिष्यति ॥
यदि स्यात् पातकैर्युक्तः स्वधर्मपरिवर्जितः ।
गयां यास्यति च स्वस्थः सोऽस्मान्संतारयिष्यति ॥
एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः ।
तेषां तु समवेतानां यद्येकोऽपि गयां व्रजेत् ॥
तस्मात्सर्वप्रयत्नेन ब्राह्मणस्तु विशेषतः ।
प्रदद्याद्विधिवत्पिण्डान् तृप्तिं गत्वा समाहितः ।
धन्यास्तु खलु ते मर्त्या गयापिण्डप्रदायिनः ॥
कुलान्युभयतः सप्त समुद्धृत्य दिवं व्रजेत् ।

वामनपुराणे—

कालञ्जरस्योत्तरतः सुपुण्य-
स्तथा हिमाद्रेरपि दक्षिणस्थः।
सकोमलः पूर्वत एव विस्तृतः
पशोः पुरः पश्चिमतोऽवतस्थे ॥
गयेनं पूर्वं नृवरेण यत्र
इष्टोऽश्वमेधश्च सकृत्सदक्षिणः।
यत्र स्वचक्रे भगवान् मुरारि-
र्द्धिस्तत्त्वमव्यक्ततनुस्तु मूर्तिः ॥

वायुपुराणे—

आनन्त्याय भवेदत्र खड्गमांसं पितृक्षये।
फलच्छागस्तथालोहमानन्त्याय प्रकल्पयेत् ॥
गयायामक्षयं श्राद्धं जपहोमतपांसि च।
पितृक्षयो न तत्पुत्रे नतत्राद्यं भवेत् ? ॥

मत्स्यपुराणे—

पितृतीर्थं गयानाम सर्वतीर्थवरं श्रुतम्।
यत्रास्ते देवदेवेशः स्वयमेव पितामहः ॥
ब्रह्मज्ञानं गयाश्राद्धं गोग्रहे मरणं तथा।
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा ॥

वशिष्ठस्मृतौ—

नन्दन्ति पितरस्तस्य सुवर्णोत्साहवर्षकाः।
यद्गयास्थो ददात्यन्नं पितरस्तेन पुत्रिणः ॥

वृहस्पतिः—

सुत उवाच

अहं सितस्ते जनकोऽस्मि तात
नाम्ना च वृत्तेन च कर्मणा च ।
अयं च मे जनको रक्तवर्णो
भृशं सकृद् ब्राह्मणश्चोपकारी ॥
अथापरं शृण्वपरः पिताऽस्य,
कृष्णो नाम्ना कर्मणा वर्णतश्च ।
एतेन कृष्णेन वृताः पुरा वै
जन्मान्यनेकान्यनुजः पुराणः ॥
एतौ भृतौ द्वावपि पुत्रौ
अवीचिसंज्ञे नरके पतन्ते ।
अहं च शुद्धेन निजेन कर्मणा
रक्तोशनं प्राप्य सुदुर्लभं तत् ।
त्वया पुनर्मन्त्रविदा गयायां
पिण्डप्रदानं नवलीदिमौ च ? ॥
मोखावरं ? पितृतीर्थवरप्रभावा—
दवीचिसंज्ञं नरकं गतोऽसौ ।
पितॄन् पितामहांश्चैव तथैव प्रपितामहान् ॥
प्रीणयामीति यन्नोर्थे त्वया दत्तमरिन्दम ।
तेनास्य ह्युपयोगो जातो वाक्येन सत्तम ॥

तीर्थप्रभावाद् गच्छामः पितृलोकं न संशयः।
तत्र पिण्डप्रदानेन कुर्याद्वुद्धरणं स्वतः॥
एतस्मात् कारणात् पुत्र अहमेता विगृह्य तु।
अतोऽस्मिन् भगवन्तं वै द्रष्टुं यास्यामि साम्प्रतम्॥
एतस्मात् कारणादिन्द्रो भगवान्......मयोदितः।
सकृद् गयाभिगमनं सकृत् पिण्डप्रदापनं॥
दुर्लभं त्वं पुनर्नित्यमस्मिन्नेव व्यवस्थितम्।
किं तत्र प्रोच्यते रैभ्य तव पुण्यमिति प्रभुः॥
येन शार्ङ्गगदापाणिर्दृष्टो नारायणः स्वयम्।
यतो गदाधरः साक्षात् तस्मिंस्तीर्थे व्यवस्थितः॥
अतो विख्यातमतुलं तीर्थमेतद् द्विजोत्तमः।

वाराह उवाच—

एवमुक्त्वा ततो देवि योगी तत्रान्तरधीयत।
रैभ्योऽपि तद् गदापाणेर्हरेः स्तोत्रमुदाहरत्॥
गदाधरं विबुधजनैरभिष्टुतं
धृतिक्षमडलनार्तिनाशनम् १।
नमाम्यहं सकलगुणं सनातनं
पुराणपूर्वं पुरुषं कुरु द्रुतम्॥
पुरातनं विमलधियां नृणामति
त्रिविक्रमं धृतिगुणकं महाबलम्।
गदाधरं रहसि न मां न्नु केशवं
विशुद्धंधर्मं विबुधैरुपावृतम्॥

व्रजन् गयां नरो यस्तु स्नानं न परिपन्थति ।
नरकस्थानपि पुनः स्वर्गं नयति सत्वरः ॥
कुले तस्य न राजेन्द्र प्रेतो भवति कश्चन ।
प्रेतसंमोक्षदानं च पिण्डदानाच्च गच्छति ॥
गयायां पिण्डदानात्तु नान्यदानं विशिष्यते ॥
एकेन पिण्डदानेन तृप्तास्ते मोक्षगामिनः ।
धान्यप्रदानं प्रवरं वदन्ति
वस्त्रप्रदानं च तथा मुनीन्द्राः ।
सर्वेषु तीर्थेष्वमरैः प्रदत्तं
तद्धर्मसेतुं प्रवदन्ति चेष्टम् ॥
यत्रजान् विपरति ? ब्रह्मणा परिकीर्तितम् ।
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ।
एषा गाथा प्रचरति तीर्थेष्वायतनेषु च ॥
सर्वे मनुष्या राजेन्द्र कीर्तयन्ति समागताः ।
किमस्माकं कुले कस्मिश्चिद् गयां यास्यति यःसुतः ॥
प्रीणयिष्यति तावच्च सप्तपूर्वांस्तथापरान् ।
मातामहानामप्येवं श्रुतिरेषा चिरंतनी ॥
गङ्गायां वास्थि क्षिपति······यः सुतः ।
तिलैःसप्ताष्टभिर्वापि दास्यते च जलाञ्जलिम् ॥

वह्निपुराणे—

पापिनो ये दुराचाराः पतितास्तीर्थगाः खगाः ।
गयायां पिण्डदानेन मुक्तिभाजो भवन्ति ते ॥

पुत्रो वा बन्धुभृत्यो वा मित्रो वा स्वजनोऽपि वा।
एताको वाऽथवाद्द्यात्तयोः सर्गः सदाभयोः ? ॥
यथा यथा व्रजन्याति जन्तुःस्थानाद् गयां प्रति ।
तथा तथा दिवं यान्ति प्रेताः पूर्वे पितामहाः ॥
वचसा येन ते यान्ति पुनश्च ते ? ।
गत्वा तेषां दिवं पूर्वं पुनस्तत्र प्रपेदिरे ॥
एष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत् ।
दद्याद् वापि मघाश्राद्धं नीलम्वा वृषमुत्सृजेत् ॥

कालिकापुराणे—

अथगयातपोदानं वाहतो भगवता तव् व्यापादितं शिरोन्यस्तं यत्र भूयोप्यात्मा यमन्यस्तं यत्नवत्त वत्सलपितामहं प्राप्य मुक्तान्क्षितौ नरस्तत्र तत्पदपिण्डोदकं दीयमानं पितरः स्वकार्यं प्रस्तार्यमिति मन्त्रात्तयोवटस्तत्र यत्किंचिद्दीयते तदक्षयं स्यात् कल्यतस्तत्प्रभावाच्च तमेव प्रपितामहं दृष्ट्वा दुःखैर्वियुज्यते ।

सौरपुराणे—

अन्यतीर्थपरं ग्राह्यं गयातीर्थमिति श्रुतम् ।
ख्यातिं जगामाथ गदाधरेति
महाघवृत्तस्य सितःकुठारः ।
यस्मिन्द्विजेन्द्राः श्रुतशास्त्र-
वर्जिताः समानतां यान्ति पितामहेन ॥
सकृत्पितॄन् यत्र च संपूज्य भक्त्या त्वमनन्येन हि चेतसैव ।
फलं महासेनं मस्वन्य ? मानवा नूनं लभन्ते भगवत्प्रसादात् ॥

महानदी यत्र सुतर्प्पिं कन्या
वालापदेशाद्धिमलोग्यनान्त ? ।
चक्रे जगत्पापविनाशमन्या
संदर्शनप्राशनमज्जनम् ॥
तत्र शक्र समभ्येत्य महानद्यास्तटेऽद्भुते ।
आराधनाय देवस्य कृत्वाश्रमपदं स्थितः ॥
प्रातः स्नायी त्वधःशायी एकभक्तैरयाचितैः ।
तपस्तेपे सहस्राक्षस्तुवन्देवं गदाधरम् ॥
तस्मै तं च प्रवेशस्य नतसर्वेन्द्रियस्य च ।
कामक्रोधविहीनस्य साग्राः संवत्सरा गताः ॥
ततो गदाधरः प्रीतो वासवं प्राह नारद ।
गच्छ प्रीतोस्मि भगवन्मुक्तपापोऽसि संप्रति ॥
निजं राज्यं च देवेश प्राप्स्यसे न चिरादिदम् ।
गयायां तीर्थदुष्टायां स्नात्वा शौचसमन्वितः ।
मम नाम समुद्दिश्य पिण्डनिर्वपणं कुरु ।
तत्र पिण्डप्रदानेन प्रेतभावादहं मखे ॥
मुक्तस्तु सच पिण्डेषु प्रेतभावश्च तत्त्वतः ।
विमुक्तास्ते द्विजाः प्राप्य ब्रह्मलोकं गता गताः ॥

वायुपुराणे—

काङ्क्षन्ति पितरः पुत्रान्नरकाद्भयभीरवः ।
गयायां यदि यः कश्चित्सोस्मान्संतारयिष्यति ॥

व्यासः—

गयां गत्वा तु यः कश्चित्पितॄन्संतर्पयेन्नरः ।
दश पूर्वान्परान्वंश्यानात्मानञ्च पुनाति सः ॥
स्थानं देहपरित्यागो गङ्गायां तु विशिष्यते ।
श्राद्धं पिण्डप्रदानञ्च गयायाञ्च विशिष्यते ॥

याज्ञवल्क्यः—

यद्ददाति गयास्थस्तु तदानन्त्यं समश्नुते ।

पुराणे—

तथा गयाशिरो यत्र यत्र पुण्या महानदी ॥
ऋषिदेवैः समाकीर्णं तीर्थं ब्रह्मसंदस्तथा ।
यत्फलं सन्निहत्पायं ? राहुग्रस्ते दिवाकरे ॥
फलं तदखिलं प्रोक्तं गयायांन्तु दिने दिने ।
यद्ददाति गयास्थस्तु सर्वमानन्त्यमश्नुते ॥
यथा वर्षत्रयोदश्यां मघास्चवनसंशयः ।
आत्मजोनात्मजो वापि गयाकूपे यदा तदा ॥
यन्नाम्ना पातयेत्पिण्डं तन्नयेद्द ब्रह्म शाश्वतम् ।

गारुडपुराणे—

स्वर्गपातालमर्त्येषु नास्ति तीर्थं गयासमम् ॥
पितरो यान्ति देवत्वं प्राप्ते पिण्डे गयाशिरे ।
गयाशीर्षे यदा पिण्डं नाम्ना येषां प्रकुर्वति ॥
नरकस्था दिवं यान्ति स्वर्गस्था मोक्षगामिनः ।

ब्रह्मवैवर्ते—

अन्यत्र कृत्वा कृत्वा न मुच्यते पैतृकादृणात् ॥
यावच्छ्राद्धं न वै पुत्रः कुर्याद् गत्वा गयाशिरे ।
शमीपत्रप्रमाणेन पिण्डं दत्वा गयाशिरे ॥
नरकस्था दिवं यान्ति स्वर्गस्था मोक्षगामिनः ।
पित्र्यार्थं निमन्त्रितब्राह्मण सन्निधौ गया
यात्रार्थं श्राद्धं करिष्य इति संकल्प्य ।
प्रतिग्रहपदज्ञं च ? काले चैव द्विजोत्तमाः ॥
वर्जयेत्कुसितानन्नान् नसावनृपसत्तम ।
केशश्मश्रुनखादीनां वपनञ्च न शस्यते ॥
अतो न कार्यं वपनं गयाश्राद्धार्थिना सदा ।
ये भारतेऽस्मिन्पितृकर्मतत्पराः
संधार्य केशानतिभक्तिभाविताः ।
अघक्षयार्थं पितृतीर्थमागता—
स्तेषामृणं सुक्षयमेष्यति ध्रुवम् ॥
वित्तशाठ्यं न कुर्वीत गयां प्राप्य सदाननः ।
वित्तशाठ्यं हि कुर्वाणो न तीर्थफलभाग्भवेत् ॥

अथ गयाश्राद्धाय ब्राह्मणाः

यदि पुत्रो गयां गच्छेत्कदा चित्कालपर्ययात् ।
तानेव भोजयेद्विप्रान् ब्रह्मणा ये प्रकल्पिताः ॥
येषां ब्रह्मसमं स्थानं सोमपाः ( स्ते प्रकीर्तिताः ) ।

अथ तीर्थोत्पत्तिः।

हयो गयो मयश्चैव त्रयो दानवसत्तमाः।
बलं लब्ध्वा (प्रबाधन्ते) देवा विष्णुमुपाययुः॥
युद्धस्थान्ते ततो विष्णुर्हयस्य च शिरो महत्।
सुदर्शनेन चक्रेण चिच्छेद स गयस्य च॥
गयस्य तच्छिरो देवैः पितृतीर्थे प्रकल्पितम्।
गयाशिरः महापुण्यं कल्पान्ते नश्यते न च॥

अथगयायात्राविधिः।

ब्रह्मपुराणे—

उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः।
विधाय कर्पटीवेषं ग्रामं कृत्वा प्रदक्षिणम्॥
ततो ग्रामान्तरं गच्छेत् श्राद्धशेषान्नभुङ्नरः।
ततः प्रतिदिनं गच्छेत् प्रतिग्रहविवर्जितः॥

महाभारते—

गृहे श्राद्धं प्रकुर्यात्तु सम्यक् संकल्प्य बुद्धिमान्।
पितृतीर्थं समुद्दिश्य संकल्पं पितृसन्निधौ॥
ब्रह्मकारितसंस्थानाद्विप्रा ब्रह्मसमाः स्मृताः।
अमानुषा गयाविप्रा ब्रह्मणा ये प्रकल्पिताः॥
तेषु तुष्टेषु संतुष्टाः पितृभिः सह देवताः।
पितृरूपान्गयाविप्रान्पूजयित्वा समाहितः॥
सर्वपापविशुद्धात्मा स्वर्गलोके महीयते।

तेषाञ्च हस्ते दत्तं वै गयायाञ्च विशेषतः ॥
तदक्षयं भवेत्तस्य पितॄणां नात्र संशयः ।
न विचार्यं कुलं शीलं विद्या च तप एव च ॥
पूजितैस्तैस्तु सन्तुष्टा देवाः सपितृगुह्यकाः ।

ब्रह्मवैवर्त्ते—

गयाशीर्षे वसेन्नित्यं स्नानं फल्गथाचरेत् ।
गयाशीर्षे सदा पिण्डदानं स्वर्गेऽपि दुर्लभम् ॥
फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् ।
गयाशिरः परिक्रम्य मुच्यते ब्रह्महत्यया ॥

महाभारते—

ततो निर्वर्तयेच्छ्राद्धं यथालाभं यथाबलम् ।
कायान् स लभते दिव्यान् स्वर्गद्वारं तु तत्स्मृतम् ॥
सवर्णा ज्ञातयो मित्रबान्धवा सुहृदश्च ये ।
तेभ्यो भूप गयाभूमौ पिण्डदानाद्विधानतः ॥
पुत्रेभ्यो दौहित्रेभ्योऽपि कनिष्ठेभ्योऽपि सर्वशः ।
ये मृताश्च नृजन्मानः पिण्डस्तेषूपतिष्ठताम् ॥
अपि तत्र क्षिपेत्पिण्डं निधानीभूतमात्मनः ।
आत्मनस्तु ददद्धैमं गयायां तु तिलैर्विना ॥
पिण्डनिर्वपणं कार्यं मृतानां तु तिलैः सह ।
पिण्डनिर्वपणं कुर्यात्तथा चान्येऽपि गोत्रजाः ॥
सवर्णा ज्ञातयो मित्रबान्धवाः सुहृदस्तथा ।
तेऽपि यूपगयाकूपे पिण्डं दद्युर्विधानतः ॥

पुत्रेभ्यो दुहितृभ्योऽपि कनिष्ठेभ्योऽपि सर्वशः ।
दद्यात्पिण्डं प्रयत्नेन बुद्धिमांस्तु समाहितः ॥
ते दिवं यान्ति सर्वेऽपि पिण्डे दत्त इति श्रुतिः ।
अतस्तेभ्यो नियमतः पिण्डं दद्यात्प्रयत्नतः ॥
ब्रह्महा च कृतघ्नश्च गोघाती पञ्चपातकी ।
सर्वे ते निष्कृतिं यान्ति गयायां पिण्डपातनात् ॥
ब्रह्मघ्नश्च सुरापश्च बालवृद्धगुरुद्रुहः ।
न तापयति तं पापं गयायामनुयाति यः ॥
आत्मीयो वाऽथवान्योऽपि गयाकूपे यदा तदा ।
यन्नाम्ना पातयेत्पिण्डं तन्नयेद् ब्रह्म शाश्वतम् ॥
मकरे वर्तमाने तु ग्रहणे चन्द्रसूर्ययोः ।
दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम् ॥

अथ पिण्डपातनश्राद्धादिषु यानि प्रशस्तानि स्थानान्युक्तानि तेषु गयाशिरस्थविष्णु ( पदादिषु ) पिण्डदानादिकं कर्तव्यम् ।

इति गयातीर्थमाहात्म्यम् ।

---

## अथ गोदावरीमाहात्म्यम् ।

तत्र प्रशंसा—ब्रह्मपुराणे—गौतमं प्रति त्र्यम्बकवाक्यम्—

गङ्गाद्वारे प्रयागे च गङ्गासागरसंगमे ।
नर्मदा तु सरिच्छ्रेष्ठा वर्ततेऽमरकण्टके ॥

यमुना (नदी) गता यत्र प्रभासे तु सरस्वती ।
कृष्णभीमरथी चैव तुङ्गभद्रा च नारद ॥
तिसृणां सङ्गमो यत्र तत्तीर्थं मुक्तिदं स्मृतम् ।
पयोष्णीसङ्गमो यत्र तपत्यातत्रमुक्तिदम् ? ॥
इयं तु गौतमी पुत्र यत्र क्वापि ममाज्ञया ।
सर्वेषां सर्वदा नृणां स्नानान्मुक्तिं प्रदास्यति ॥
किञ्चित्काले पुण्यतमं किञ्चित्तीर्थं सुरागमे ।
सर्वेषां सर्वदा तीर्थं गौतमी नात्र संशयः ॥
इयं माहेश्वरी गङ्गा गौतमी वैष्णवीति च ।
ब्राह्मी गोदावरी नन्दा सुनन्दा कामदायिनी ॥
ब्रह्मतेजःसमानीता सर्वपापप्रणाशिनी ।
स्मरणादेव पापौघं सा नयेद्यमसादनम् ॥
पञ्चानामपि भूतानां या च श्रेष्ठतमा मता ।
तत्रापि तीर्थभूतानां स्नातव्या याः स्थिरापगाः ॥
नाम्ना भागीरथी श्रेष्ठा ताभ्यायागौतमत्रया ? ।
आनीता सजया गङ्गा आभ्यो नान्यच्छुभावहम् ॥
इत्येतत्कथितं पुत्र गौतमाय महात्मने ।
साक्षाद्धरेण देवेन श्रुतं तव निवेदितम् ॥
एवं सा गौतमी गङ्गा सर्वेभ्योऽप्यधिका मता ।
तत्स्वरूपं च कथितं यदि ते श्रवणस्पृहा ॥

नारद उवाच—

द्विविधाऽसौ च गदिता एकापि सुरसत्तम ।

एको वंशस्तु कथित इक्ष्वाकोर्वंशसंभवः ॥
ब्राह्मणेनाहृतो भेदः सजटः सर्वतोदयः ।
क्षत्रियेण परोऽप्यंशो जटास्वेव स्थितः प्रभोः ॥
एतद्विस्तरतः सर्वं कथयाऽशु मम प्रभो ।

ब्रह्मोवाच—

एवमेषापि ते प्रोक्ता गङ्गाख्याता महामते ।
माहेश्वरी वैष्णवी च सैव ब्राह्मी च पावनी ॥
भागीरथी देवनदी हिमवच्छिखराश्रया ।
महेश्वरजटावारि एवं द्वैविध्यमागतम् ॥
विन्ध्यस्य दक्षिणे गङ्गा गौतमी सा निगद्यते ।
उत्तरे साऽपि विन्ध्यस्य भागीरथ्यभिधीयते ॥

वायुपुराणे—

सह्यस्य चोत्तरान्ते तु यत्र गोदावरी नदी ।
पृथिव्यामपि कृत्स्नायां सप्रदेशो मनोरमः ॥

ब्रह्मपुराणे—

ब्रह्मोवाच

वेदे पुराणऋषिभिः प्रसिद्धा या च गौतमी ।
लोके नमस्कृता सा च (सर्वपापप्रणाशिनी) ॥
वक्ष्ये कथं तामपि सुप्रभावा—
मशेषतोऽत्रादरकस्य शक्तिः ।
भक्त्या प्रवृत्तस्य यथा कथञ्चि—
न्नैवापराधोऽस्ति न संशयोऽत्र ॥

तस्मात्तु दिङ्मात्रमतिप्रसन्नैः
प्रस्तूयते लोकहिताय भक्त्या ।
सर्वत्र सर्वदा पुण्या को वास्या गुणकीर्तनम् ॥
वक्तुं शक्तस्ततस्तस्यै नम इत्येव युज्यते ।
एतस्मान्नाधिकं मन्ये किञ्चित्तीर्थं जगत्त्रये ॥
अन्यतीर्थेन साधर्म्यं न युज्येत कथञ्चन ।
सर्वेषामधिका यस्मात्तन्नैवोपगमन्ततः ॥
न जातं विचित्रं मे प्रमाणं तु युगत्रये ।
यदा चेयं हरे शीर्षं प्राप्ता गङ्गा महामुने ॥
तदा प्रवृत्तिवेशस्य प्रिया प्रियतरा भवेत् ।
तद् विशिष्टतमं बुध्वा गजवक्त्रमुवाच सा ॥
उमा लोकत्रयेशाना या माता जगतो मता ।
त्वयाऽवतारिता गङ्गा मर्त्यमीशप्रिया सती ॥
पुनश्चैष तत्र चित्ते श्रद्धास्ते सर्वदा सुत ।
तस्मान्निवर्तयेशानं देवदेवं महेश्वरम् ॥
मानुषं वचनं श्रुत्वा पुनराह गणेश्वरः ।
तव शक्त्या शिवो देवो गङ्गातोयान्निवर्तितुम् ॥
गङ्गाऽवतारिता पूर्वं गौतमेन महात्मना ।
ऋषिणा लोकपूज्येन हितकर्त्रा जगत्त्रये ॥

तथा—

एवं प्रोक्त्वा पुनर्विप्राभ्ध्यात्वा प्राह शिवं तदा ।
सर्वलोकोपकाराय पुनर्याचितवानिदम् ॥

यावत्सा गङ्गा देवीति सुरो ब्रह्मणोशिरैः ? ।
सर्वत्र सर्वदा तस्या स्थातव्यं वृषभध्वज ॥
फलेप्सूनां फलं दाता त्वमेव जगतः प्रभो ।
यस्य ते स विधिर्नित्यं तदेव शुभदं विदुः ॥
सर्वत्र तव सांनिध्यात्सर्वतीर्थसुखंकरम् ।
तद्गौतमवचः श्रुत्वा पुनहर्षाच्छिवोऽब्रवीत् ॥
यत्र यत्र च यत्किञ्चिद्यो वा भजति भक्तितः ।
तत्र स्नानमथो दानं पितॄणां वाऽपि तर्पणम् ॥
श्रवणं पवनं वापि स्मरणञ्चापि गौतम ।
सप्तद्वीपवती पृथ्वी सशैलवनकानना ॥
सरत्नासोषीरम्या सार्णवा धर्मभूपिता ! ।
एवंविधा तु सावित्र (चित्रं) गोशब्देनाभिधीयते ॥
चन्द्रसूर्यग्रहे काले सन्निधाय यतव्रतः ।
भूभृतो वैष्णवो भक्त्या तांगसालं तुप्ता धुवा ? ॥
यो ददाति द्विजश्रेष्ठ तत्र तत्पुण्यमाप्नुयात् ।
तस्माद्दूरं पुण्यमेति स्नानदानादिना द्विजः ॥
तस्माद्द गोदावरी गङ्गा त्वयाऽऽनीता भविष्यति ।
तस्मात्सं देवो गङ्गाया यो निवर्तयितुस्त्वया ॥
अथाऽपि मानवे तस्मात्मातुपान्निप्रयासकैः ! ।
तिरोधातुमथोशक्तस्तव वाक्यात् क्षमस्व मे ॥
ततः प्रभृति विघ्नेशो मनुजान् प्रति किञ्चन ।
विघ्नं नाचरते यस्तु तमुपास्य प्रवर्तते ॥

अथ विघ्नमनादृत्य गौतमश्चातिभक्तितः ।
सुकृतार्थोऽभवल्लोके न किञ्चिदवशिष्यते ॥
अस्याः प्रभावं को ब्रूयादपि वर्षशतैरपि ।
संक्षेपेण मया प्रोक्तमितिहासमनुत्तमम् ॥
अस्मिल्लोके पदं वापि भक्तितः शृणुयात् पठेत् ।
गङ्गागङ्गेति वाक्यं वा स तु पुण्यमवाप्नुयात् ॥

कूर्मपुराणे—

गोदावरी नदी पुण्या सर्वपापविनाशिनी ।
तत्र स्नात्वा पितृन् देवान् तर्पयित्वा यथाविधि ॥
सर्वपापविशुद्धात्मा गोसहस्रफलं लभेत् ।

अथ गोदावर्या उत्पत्तिः ।

अस्मिँस्तद्भारते वर्षे वनं दण्डकसंज्ञितम् ।
तत्र तीव्रं तपोघोरं गौतमोऽनशनं द्विजाः ॥
चकार तस्य तु ब्रह्मा परितोषं गतः प्रभु ।
उवाच तं मुनिं ब्रह्मन्वरं ब्रूहि तपोधन ॥
एवमुक्तस्तदाऽनेन ब्रह्मणा लोककर्तृणा ।
उवाच सद्यः शक्तिं मे धान्यानां देहि पाचने ॥
एवमुक्तो ददौ तस्मै तमेवार्थं पितामहः ।
वरं लब्ध्वा वरं विप्राशनश्रृङ्गे महीश्रमम् ? ॥
चकार तस्याथशिव कप्यते शालयो द्विजाः ? ।
रोप्यैवं संगवे नूनं मध्यह्ने पाच्यते तथा ॥

स सर्वातिथ्यमकरोद् ब्राह्मणेभ्यो ददौ फलम्।
कस्यचित्त्वथ कालस्य महती द्वादशाब्दिका॥
अनावृष्टिः समुत्पन्ना महती लोमहर्षणा।
तां दृष्ट्वा मुनयः सर्वे देव(दैत्य)दारुवनेचराः॥
बुभुक्षया पीड्यमानाः प्रययुर्गौतमं तदा।
अथ तानागतान् दृष्ट्वा गौतमःशिरसा नतः॥
उवाच स्थीयतामत्र गृहे नरवरात्मजैः।
एवमुक्तास्तु ते तेन तस्थुर्विविधभोजनैः॥
भुञ्जानाश्चाप्यनावृष्टिश्चिरादपि निवर्तिता।
निवर्तितायां तस्यां वै यात्रां ते चक्रिरे द्विजाः॥
तीर्थयात्रानिमित्तं तु सर्व एवं महर्षयः।
ते सर्वे संशयं छेत्तुं वृष्ट्यवर्षसहस्रकम्॥

शाण्डिल्य उवाच

उपकारः कृतस्तेन श्रोषयाम ? पिता गुरुः।
तप्त्वा पृच्छतच्छत्रुं यामत्र विनिरामयः॥
एवमुक्तं तु . प्रेतत्वाद्दत्तवाक्यमनुब्रवीत्।
तमर्थमनुसंचिन्त्य मरीचिः परमो मुनिः॥

वायव्य उवाच

शाण्डिल्य शोभते वाक्यं पिता ते गौतमो मुनिः।
एवमृषिर्धर्मरतो ध्याननिष्ठस्तपोधनः॥

एवमुक्तेऽपि जहसुः सर्वे ते मुनयस्तदा ।
किमस्माभिः स्वको देहो विक्रीतश्चान्नभक्षणात् ॥
एवमुक्त्वा पुनस्ते तु गर्वप्रशमनं प्रति ।
कृत्वा मायामयीं गां तु तच्छालायां व्यसर्जयन् ॥
तां भवन्तीं ततो दृष्ट्वा मुनिः क्षिप्रगतिस्तदा ।
उवाच गौतमो धीमान् तान्मुनीन् प्रणतः स्थितः ॥
किमर्थं गम्यते विप्र साधु संततमाचिरम् ।
मां विहाय महाभक्तं प्रयतञ्च विशेषतः ॥

ऋषय ऊचुः

गोवध्येयमिमां ब्रह्मन् यावन्नावतरेर्भवान् ।
तावदन्नं न भुञ्जीमो भवतो वै महामुने ॥
एवमुक्तो गौतमस्तु मुनीन् स प्राह धर्मवित् ।
प्रायश्चित्तं गोवधस्य दीयतां मे तपोधनाः ॥

ऋषय ऊचुः

इयं गौर्निभृता ब्रह्मन् मूर्छिता भव्यवाञ्छिता ।
गां चालय ध्रुवं चैषा उत्थास्यति न संशयः ॥
प्रायश्चित्तं मृता या स्यादमृतायाः कृतं न्विदं ।
व्रतदानेन सुकृतमित्युक्त्वा प्रययुः क्वचित् ॥
गतेषु गौतमो धीमान् हिमवन्तं महागिरिम् ।
समाराधयितुं देवं तेपे च सुमहत्तपः ॥
शतमेकं तु वर्षाणां सहस्राराधितो भवम् ।

ब्रह्मोवाच

पृथग् वक्तुं न शक्नोमि न च त्वं श्रवणे क्षमः ॥
तथाऽपि किञ्चिद्वक्ष्यामि शृणु नारद यत्नतः ।
यान्यतिव्यक्ततीर्थानि अभिवन्द्यानि यानि वै ॥
तानि वक्ष्यामि संक्षेपान्नमस्कृत्य त्रियम्बकम् ।
यत्रासौ भगवानासीत्प्रत्यक्षं त्र्यम्बको मुने ॥
त्र्यम्बकं नाम तत्तीर्थं भुक्तिमुक्तिप्रदायकम् ।

सौरपुराणे—

गोदावरी नदी यत्र निर्गता भ्रमहारिणी ।
तत्र देवाधिदेवेशस्त्रियम्बक इति स्मृतः ॥
तत्र स्नानं जपो दानं श्राद्धं ब्रह्ममखं कृतम् ।
सर्वं तदक्षयं प्रोक्तं नूनं ब्रह्मगिरौ मुने ॥
तत्र स्नात्वा शिवं दृष्ट्वा देवदेवं त्रियम्बकम् ।
स्कन्दनन्दिसमो भूत्वा क्रीडते शिवसन्निधौ ॥

कूर्मपुराणे—

तीर्थं त्रियम्बकं नाम सर्वदेवनमस्कृतम् ।
पूजयित्वा ततो रुद्रं ज्योतिष्टोमफलं लभेत् ॥

मत्स्यपुराणे—

नदी गोदावरी पुण्या त्रिसन्ध्यं तीर्थमुत्तमम् ।
तीर्थं त्रियम्बकं नाम. सर्वतीर्थनमस्कृतम् ॥
यत्रास्ते भगवानीशः स्वयमेव त्रिलोचनः ।

श्राद्धमेतेषु सर्वेषु दत्तं कोटिगुणं भवेत् ॥
स्मरणादपि पापानि क्षीयन्ते शतधा द्विजाः ।

ब्रह्मोवाच

अहल्यासंगमं नाम तीर्थं त्रैलोक्यविश्रुतम् ॥
तया तु संगता देवी अहल्या गौतमप्रिया ।
ततः प्रभृति तत्तीर्थमहल्यासंगमं स्मृतम् ॥

ब्रह्मोवाच

अरुणावरुणे चैव नद्यौ पुण्यतमे शुभे ।
तयोच श्संगमौ पुण्यौ गङ्गायां मुनिसत्तम ॥

ब्रह्मोवाच

ततो गोवर्धनं नाम तीर्थं पापप्रणाशनम् ।
पितॄणां प्रीतिजननं स्मरणादपि मुक्तिदम् ॥
गौतम्याश्च शुभे पारे गावो वत्रुरेव च ।
गोवर्धनं ततस्तीर्थं देवानां प्रीतिवर्धनं ॥
तत्र स्नानं मुनिश्रेष्ठं पुनर्विष्णुमयामुखी ।

ब्रह्मोवाच

शचीतीर्थमिति ख्यातं सर्वपापप्रणाशनम् ।
प्रथमं तु शचीतीर्थं द्वितीयं वैष्णवीं विदुः ॥
आर्कशैवश्च सौम्यश्च व्राशिष्टं च सर्वदम् ।
हयमेधफलं दद्युस्तीर्थानि प्रत्यहं सुराः ॥

तस्मात्तत्स्नानदानेन तेषु तीर्थेषु नारद ।
हयमेधफलं पुण्यं प्राप्नोति न मृषा वचः ॥

ब्रह्मोवाच

सोमतीर्थमिति ख्यातं पितॄणां प्रीतिवर्धनम् ।
पञ्चविंशतिनद्यश्च गङ्गायां च गता मुने ॥
सोमतीर्थञ्च गान्धर्वं देवतीर्थमतःपरम् ।
पूर्णतीर्थं ततः शीघ्रं श्रीपर्णं संगमस्तथा ॥
इलायाः संगमञ्चैव महिमासंगमं तथा ।
स्वागतासंगमं पुण्यं कुसुमायाश्च संगमम् ।
पुष्टिसंगममाख्यातं कर्णिकासंगमं श्रुतम् ॥
वेणवासंगमश्चैव कृत्सरासंगमं तथा ।
वासवीसंगमश्चैव शिल्पाचार्या तथा शिला ॥
कुसुम्भिका उषा रथ्या शान्तिदा देव नारद ।

ब्रह्मोवाच

प्रवरासंगमं नाम्ना श्रेष्ठासौ च महानदी ॥
सर्वसिद्धेश्वरो देवो सर्वलोकोपकारकः ।
तत्र पञ्चसहस्राणि तीर्थानि गुणवन्ति च ॥
तत्र शम्भुः स्वयं तस्थौ सर्वदा सुरपूजितः ।
तास्वाप्लुतानां सर्वेषां भुक्तिर्वा मुक्तिरेव च ॥
यद्वापि मनसः कामो देवानामपि दुर्लभः ।

प्रेरितं देवदेवेन शक्तिर्या प्रेरितेति सा ॥
प्रवृत्ता सैव धिष्ण्याप्रवरैश्च महानदी ? ।

ब्रह्मोवाच

वृद्धसंगममाख्यातं यत्र वृद्धेश्वरःशिवः ॥
रूपसौभाग्यसंपत्ति—पुत्रपौत्र—विवर्धनम् ।
आयुरारोग्यकल्याणं जयप्रीतिविवर्धनम् ॥
स्नानदानादिहोमेन पितॄणां पावनं परम् ।
तत्रैव च मुदं प्राप्ता वृद्धया गौतम ऋषिः ॥
तत्र स्नानं च दानं च सर्वाभीष्टप्रदायकम् ।

ब्रह्मोवाच

पिप्पलं तीर्थमाख्यातं चक्रतीर्थस्य दक्षिणे ।
यत्र चक्रेश्वरो देवश्चक्रं प्रापस्वयं हरिः ॥
यत्र विष्णुः स्वयं स्थित्वा चक्रार्थं तपति प्रभुः ।
पूजयामास तत्तीर्थं चक्रतीर्थमुदाहृतम् ॥
यत्र प्रीतोऽभवद्विष्णौ शम्भुस्तत्पिप्पलं विदुः ।
यानि क्षेत्राणि तीर्थानि नायान्ति पृथिवीतले ॥
तेभ्यो दकमधिकमनुसर्पति देवता ? ।
यत्र देवा मुक्तपापास्तत्तीर्थं पापनाशनम् ॥
तत्र स्नानं च दानं च ब्रह्महत्याविनाशनम्
गवाञ्च पावनं यत्र गोतीर्थं तदुदाहृतम् ॥
तत्र स्नानान्महाबुद्धे गोतीर्थं फलमश्नुते ।

यत्र गंगा जगद्धात्री यत्र स त्र्यम्बकस्य च ॥
सुरवासप्रतिष्ठानं सदैव त्र्यम्बकस्य च ।
सर्वक्रतुफलं पुण्यं स्मरणादघनाशनम् ।
किंपुनः स्नानदानाभ्यां देवदेवस्य दर्शनात् ॥

ब्रह्मोवाच

महानलमितिख्यातं वडवानलमुच्यते ।
महानलो यत्र देवो वडवानलमुच्यते ॥
मृत्युना स्थापितं लिङ्गं महासत्त्वमितिस्मृतम् ।
ततः प्रभृति तत्तीर्थं वडवासंगमं विदुः ॥
महानलो यत्र देवस्तत्तीर्थं भुक्तिमुक्तिदम् ।

ब्रह्मोवाच

आत्मतीर्थमिति ख्यातं भुक्तिमुक्तिप्रदं नृणाम् ॥
दत्तात्रेयो मुनिः पूर्वं गङ्गां गत्वा शुचिर्यतः ।
कृताञ्जलिपुटो भूत्वा शिवं स्तुत्वा च भक्तितः ॥
आत्रेयस्य स्तुतिं श्रुत्वा तोषयद्भगवान्हरः ।
वरदोऽस्मीति तं प्राह योगिनीवश्यकृद्भवः ॥
आत्मज्ञानञ्च मुक्तिञ्च भक्तिञ्च विपुलां रतिम् ।
तीर्थस्य चैव माहात्म्यं रेवायां त्रिदशान्वितः ॥
एवमस्त्विति तं शम्भुरुक्त्वावान्तरधीयत ।
ततः प्रभृतितत्तीर्थमात्मतीर्थं विदुर्बुधाः ॥
तत्र स्नानेन दानेन मुक्तिःस्यात्किं ततःफलम् ।

ब्रह्मोवाच

अश्वतीर्थमिति ख्यातमश्वत्वं न ततः परम् ॥
उत्तमं मन्दतीर्थञ्च सर्वसिद्धिप्रदं नृणाम् ।
मन्दवारे च येऽश्वत्थं प्रातरुत्थाय नान्यगाः ॥
आलभन्ते च तेषां वै ग्रहपीडां व्यपोहति ।
ततः प्रभृति तत्तीर्थमश्वत्थं पिप्पलं विदुः ॥
तीर्थं शनैश्चरं नाम तत्र गत्वा च सात्त्विकम् ।
याज्ञिकं चापि तत्तीर्थं सामगं तीर्थमेवच ॥
इष्टानि तत्र तीर्थानि सहस्राण्यथ षोडश ।
तेषु स्नानं दानं च कृत्वा तत्र फलं लभेत् ॥

ब्रह्मोवाच

वैदर्भीसंगमं पुण्यं रेवतीसंगमं तथा ।

कठ उवाच

अध्यापयस्व भो ब्रह्मन् शिष्यं विद्यार्थिनंपरम् ॥
शुश्रूषातत्परं भक्तं कुलीनं सत्यवादिनम् ।
तथेत्युक्त्वा भरद्वाज प्रादात् विद्यामशेषतः ॥
प्राप्तो विद्यां कठः प्रीत्या भरद्वाजमथाब्रवीत् ।
इच्छेयं दक्षिणां दातुं गुरोस्तव मनःप्रियम् ॥
वदस्व दुर्लभं वाऽपि गुरो तुभ्यं नमोस्तु मे ।

भारद्वाज उवाच

गृहाण कन्यां विधिवद् भार्यां कुरु रमायतीम् ॥

अस्याः प्रीत्या वर्तितव्यं या भवेद् दक्षिणा मम ।
तथेत्युक्त्वा गुरोर्वाक्यं कन्यां जग्राह पाणिना ॥
रेवतीं विधिवत्तीर्थे समीक्ष्य स कठः स्वयम् ।
तत्रैव पूजयामास देवदेवं स शंकरम् ॥
रेवत्या रूपसंपत्त्यै शिवा प्रोवाच रेवती ।
सुरूपा चारुसर्वाङ्गी न रूपेणोपमीयते ॥
सा भवत्तत्र गङ्गायास्तस्मात्तन्नामतो नदी ।

ब्रह्मोवाच

रामतीर्थमितिख्यातं नृणां हत्याविनाशनम् ।
यस्याः श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥
दण्डकं समनुप्राप्य रामो गङ्गां च गौतमीम् ।
प्रावोचद्वचनं रम्यं लक्ष्मणं शुभलक्षणम् ॥
अहो गङ्गाप्रभावोऽयं त्रैलोक्ये नोपमीयते ।
वयं धन्या यतो गङ्गा दृष्टास्माभिश्च पावनी ॥
हर्षेण महता युक्तो देवं स्थाप्य महेश्वरम् ।
कृताञ्जलिपुटो भूत्वा रामस्तुष्टाव शङ्करम् ॥
ततस्तु भगवानाह रामं शम्भुः सुलक्षणम् ।
वरान् वृणीष्व भद्रं ते रामः प्राह वृषाकपिम् ॥
स्तोत्रेणानेन ये भक्त्या त्वां स्तोष्यन्ति महेश्वर ।
तेषां सर्वाणि कार्याणि सिद्धिं यान्तु च शङ्कर ॥
एषा च पितॄन् शम्भो पतिता नरकार्णवे ।
तेभ्यः पिण्डादिदानेन प्रीता यान्तु त्रिविष्टपम् ॥

जन्मप्रभृति पापानि मनोवाक्कायजान्यथ ।
अत्र तु स्नानमात्रेण तदा नाशमवाप्नुयुः ॥
अत्र येन कृतः शंभो दानमर्थिभ्यश्चाण्वपि ।
सर्वं तदक्षयं शंभो दातृभ्यः फलकृद्भवेत् ॥
एवमस्त्विति तं चोक्त्वा शंकरोऽदृश्यतां ययौ ।

ब्रह्मोवाच

तपोवनमितिख्यातं नन्दिनीसंगमस्तथा ।
सिद्धेश्वरं च तत्तीर्थं गौतम्या दक्षिणे तटे ॥
ततः शार्दूलतीर्थं च चक्रतीर्थं च शांकरम् ।

ब्रह्मोवाच

यमतीर्थमिति ख्यातं पितॄणां प्रीतिवर्धनम् ।
ब्रह्माणं तोषयामास भानोर्वै दक्षिणे तटे ॥
ईशविष्णू चोत्तरे च स्वयं धर्मः प्रतापवान् ।
दत्तवन्तौ वनश्रेष्ठं शरमा याति सा पदम् ॥

ब्रह्मोवाच

पुरुष्णीसंगमश्चेति तीर्थं देवेन विश्रुतम् ।
पुरुष्णी चेति विख्याता गङ्गायां संगता नदी ॥
तत्रापि गिरिशं क्रुद्धं चक्रुर्यज्ञस्य दक्षिणम् ।
तत्र त्रीणि सहस्राणि तीर्थान्याहुः पुराणगाः ॥
उभयोस्तीरयोः स्नानं पृथक्यागफलं विदुः ।
तेषु स्नानं च दानं च वाजपेयाधिकं फलम् ॥

ब्रह्मोवाच

सहस्रकुण्डमाख्यातं तीर्थं वेदविदो विदुः ।
यस्य स्मरणमात्रेण सुखैः संपद्यते नरः ॥
तत्र स्नानं च दानं च सहस्रफलदायकम् ।

ब्रह्मोवाच

अजरासंगमं नाम तीर्थं त्रैलोक्यविश्रुतम् ।
ऋषिभिः सेवितं नित्यं सिद्धै राजर्षिभिस्तथा ॥
जराशोकविनाशार्थमानीतं गरुडेन यत् ।
तत्राभिषेचिता नागा नागालयस्तदुच्यते ॥
गरुडेन यतो वारि अनीतं यद्रसातलात् ।
तद्गाङ्गं वारि अद्यौघं सद्यः शोकनिवारणम् ॥
जराशोकविनाशार्थमानीतं गरुडेन यत् ।
जराया वारणं यस्मान्नागानामभवत् स्थितम् ॥
रसातलभवा गङ्गा नामसञ्जीवनं यतः ।
जराशोकविनाशार्थं गङ्गाया दक्षिणे तटे ॥
रसातलभवा गङ्गा मर्त्यलोकाभयाय च ।
तयोश्च सङ्गमो यत्र किंपुनस्तत्र वर्ण्यते ॥
तस्यास्तु स्मरणादेव नाशं यात्यघसंचयः ।
तत्र स्नानेन दानेन फलं ते वक्तुमीशते ॥

ब्रह्मोवाच

व्यासतीर्थमितिख्यातं प्राचेतसमतः परम् ।

स्कन्दपुराणे—

वृन्दा वैवा(रेवा)हरिद्रा च गौतमी पुण्यसंभवा ॥
व्यासेन तत्कृतं पूर्वं यत्तीर्थं लोकविश्रुतम् ।
कार्तिकस्य सिते पक्षे चतुर्दश्यां जितेन्द्रियः ॥
स्नापयेज्जगदीशानं दध्ना क्षीरेण सर्पिषा ।
मधुना खण्डयुक्तेन कुशतोयेन वा पुनः ॥
श्रीखण्डेन सुगन्धेन पूजयेत महेश्वरम् ।
ततः सुगन्धपुष्पैश्च बिल्वपत्रैश्च पूजयेत् ॥
गण्डुकाष्ठप्रदानेन पातकं दिवसार्जितम् ।
मासार्जितं च नश्येत गण्डुकाष्ठशतेन वा ॥
षाण्मासिकं सहस्रेण आब्दिकं द्विगुणेन च ।
आजन्मजनितं पापमयुतेन प्रणश्यति ॥
द्विगुणे नश्यते व्याधिस्त्रिगुणेन धनागमः ।
षड्गुणैर्जायते वाग्मी सिद्धिस्तद्द्विगुणैस्ततः ॥
रुद्रत्वं दशलक्षैश्च जायते पाण्डुनन्दन ।
पौर्णमास्यां नरश्रेष्ठ स्नानं कुर्यात्प्रयत्नतः ॥
मन्त्रोक्तेन विधानेन कृत्वा पापप्रमोचनम् ।
देवान् पितॄन् मनुष्यांश्च विधिवत्तर्पयेन्नरः ॥
श्राद्धं च कारयेन्मानं यदोच्छेत् पितृमोचनम् ।
शूद्रीसंग्राहितो दृष्ट्वा वृषलीगुरुनिन्दकः ॥
ब्रह्मगोघ्नः सुरापी च कृतघ्नः सं(करः) परः ।
स्नानमात्रेण राजेन्द्र मुच्यते सर्वकिल्बिषैः ॥

स्कन्दपुराणे—

मार्कण्डेय उवाच

ततो गच्छेत्तु राजेन्द्र नालेश्वरमिति श्रुतम्।
सर्वपापहरं लिङ्गं सैंधवारण्यमध्यतः॥
ये पश्यन्ति जगन्नाथं सर्वपापक्षयं करम्।
न पीडन्ति ग्रहास्तानि तत्रेयं वैदिकी स्मृतिः॥
ततो गच्छेत राजेन्द्र ब्रह्मेश्वरमनुत्तमम्।
यस्य दर्शनमात्रेण मुच्यते सर्वकिल्विषैः॥
पञ्चामृतेन तोयेन दधिदुग्धैःसशर्करैः।
पूजयेज्जगदीशानं सर्वपापहरं कलौ॥
श्राद्धं कुर्युश्च यत्नेन ब्रह्मकुण्डे सनातनम्।
द्वादशाब्दानि नियतं विघ्नाभवं च पूर्वजाः॥

ब्रह्मोवाच—

कुशतर्पणमाख्यातं सर्वतीर्थवरं मुने।
यज्ञं कृत्वा पुरा राजन् ब्रह्मणा पद्मयोनिना॥
संमार्जिता कुशा यत्र पतिता भूतले शुभे।
कुशतर्पणमाख्यातं बहुपुण्यफलप्रदम्॥
कुशैश्च तर्पिताः सर्वे कुशतर्पणमुच्यते।
कुशतर्पणमासाद्य तत्र भक्त्या नराधिपः॥
स्नानदानादि यः कुर्यात् स गच्छेत्परमं पदम्।
स्मरणं पठनं वापि श्रवणं चापि भक्तितः॥
सर्वकामप्रदं पुण्यं भुक्तिमुक्तिप्रदं विदुः।

ब्रह्मोवाच—

प्रणीतासंगमं नाम तीर्थं त्रैलोक्यविश्रुतम् ।
विन्ध्यस्य दक्षिणे पार्श्वे सह्यः शैलस्तु दक्षिणे ॥
सर्वस्य सर्वकालेऽपि कर्मभूमिः शुभोदया ।
सुस्थित्वा यत्र देशेषु शुचिर्भूत्वा यतात्मवान् ॥
दीक्षितोऽपि प्रदेशे वै यन्नाम्नासौ प्रकीर्तितः ।
तद् देवयजनं पुण्यं सर्वतो ब्रह्मणो गिरेः ॥
यद्देवयजनं वेदं दण्डकारण्यमुच्यते ।
तत्रस्थः कृमिकीटोऽपि सोऽप्यन्ते मुक्तिमाप्नुयात् ॥
धर्मबीजं मुक्तिबीजं दण्डकारण्यमुच्यते ।
विशेषाद् गौतमीं प्राप्तो देशः पुण्यतमो भवेत् ॥
तत्राहं तिष्ठते यज्ञे यज्ञेशं भक्तिभावनः ।
मनुष्यावयवैरेव संभाराः संभृता मया ॥
एतस्मिन्नन्तरे चैव विष्णुर्वाचाऽब्रवीच्च माम् ।
सर्वसंपूर्णमभवल्लक्ष्मीर्जाता मयेप्सिता ॥
विससर्ज मयाख्यातं प्रणीता च कुशं तथा ।
तथा विसर्जिते यज्ञे प्रणीतायाश्च वै ततः ॥
प्रणीतोदकमप्येतत्प्रणीतेति नदी श्रुता ।
सा जाता मुनिशार्दूल कृच्छ्रकृच्छ्रफलप्रदा ॥
प्रणीतासंगमे ब्रह्मन् मुख्ये त्रैलोक्यविश्रुते ।
स्नानदानादि यः कुर्यात्सगच्छेत्परमं पदम् ॥
स्मरणं पठनं वाऽपि श्रवणं वापि भक्तितः ।

सर्वकामप्रदं पुंसां भुक्तिमुक्तिप्रदं विदुः ॥
उभयोस्तीरयोस्तत्र तीर्थान्याहुर्मनीषिणः ।
षडशीतिसहस्राणि तेषु पुण्यमनुत्तमम् ॥

ब्रह्मोवाच—

भद्रतीर्थमिति ख्यातं सर्वारिष्टनिवारणम् ।
सर्वपापप्रशमनं सर्वशान्तिप्रदायकम् ॥
हरिण्यस्य हरिःप्रीतो ददौ भद्रं कुलं तथा ।
ततः प्रभृतितीर्थानि भद्रतीर्थमिहोच्यते ॥
सर्वमङ्गलदं पुंसां तत्र भद्रपतिर्हरिः ।

ब्रह्मोवाच—

चक्षुस्तीर्थमिति ख्यातं रूपसौभाग्यदायकम् ।
यत्र योगेश्वरो देवो गौतम्या उत्तरे तटे ॥
धर्मेण तपसा चैव वैश्यो नाम सुकुण्डलिः ।
विभीषणप्रसादेन यत्रौषधमवाप्नुयात् ॥
उत्तमं जीवनं नाम नेत्रदं शुभदं शिवम् ।
ततः प्रभृति तत्तीर्थं मृतसञ्जीवनं विदुः ॥
चक्षुस्तीर्थं सयोगेशं स्मरणादपि पापहम् ।

ब्रह्मोवाच—

सामुद्रतीर्थमाख्यातं सर्वतीर्थफलप्रदम् ।
निसृष्टा गौतमेनासौ गङ्गा पापप्रणाशनी ॥
लोकानामुपकारार्थं पाश्चात्सा ब्रह्मणो गिरेः ।
प्राग्गच्छन्तीं देवनदीं दृष्ट्वा वार्धिरचिन्तयत् ॥

या वन्द्या जगतामीश ब्रह्मणाऽपि नमस्कृता ।
पितामहं प्रति गच्छेयं याचेत्सा मम दूषणम् ॥
एवं विसृज्य तत्रेशो मूर्तिमान्विनयान्वितः ।
कृताञ्जलिपुटो गङ्गामाहेदं सरितां पतिः ॥
किन्तु त्वद्गौरवेणेशमतिरिक्ता ततस्त्वहम् ।
ब्रवीमि देवि गङ्गे त्वां त्वं मया संगता भव ॥
नैकरूपामहं शक्तः संगन्तुं बहुधा यदि ।
संगमिष्यामि देवि त्वं संगच्छेर्यदि नान्यथा ॥
सप्तर्षीणां च या भार्या अरुन्धतिपुरोगमाः ।
भर्तृभिः सहिता माता आनयन्तु तदा त्वहम् ॥
अल्पभूता भविष्यामि यथेश्चाल्पभरो मम ? ॥
तथेत्युक्त्वा ऋषीणां स भार्याभिर्ऋषिभिर्हृतः ।
आनयामास तां देवीं सप्तधा सा व्यभज्यत ॥
सर्वयज्ञगौतमीगङ्गाभार्याभिः सप्त भेजिरे ? ।
सप्तर्षीणां नाम्ना (ऽभूत्) सप्तगङ्गासमो विदुः ॥
तत्र स्नानञ्च दानञ्च श्रवणं पठनं तथा ।
श्रावणं वापि यच्छक्त्या सर्वकामप्रदस्त्विवति ॥

ब्रह्मोवाच—

सा संगता पूर्वमपां पतिन्तु
गङ्गापि भार्याभिः सप्त भेजे ।
( अभूत् ) सुराणामपि वन्दनीया
देवैश्च यत्तैरनुगम्यमाना ॥

संस्तूयमाना ऋषिभिर्म(ह)द्भिः
सर्वे पुराणेषु विदोऽवजज्ञे ।
ज्ञाता गौतमीवाग्निरनसत्त्वा ?
स्तोष्यन्ति मन्त्रैः स्तुतिभिःप्रभूतैः ॥
हृष्टैश्च तुष्टैर्मुदितैर्मनोभिः (१) ॥
कृताञ्जलिपुटाः सर्वे स्तुवन्ति हरिशंकरौ ।
संगमेषु प्रसिद्धेषु नित्यं सप्तसु नारद ॥
समुद्रस्य च गङ्गाया नित्यं देवौ प्रतिष्ठितौ ।
गौतमेश्वर आख्यातो यत्र देवो महेश्वरः ॥
ब्रह्मेश्वर इतिख्यातो मयैव स्थापितः शिवः ।
चक्रपाणिरिति ख्यातः स्तुतो देवो मया सह ॥
तत्र सन्निहितो विष्णुर्देवैः सह मरुद्गणैः ।
ऐन्द्रं तीर्थमितिख्यातं तदेव हयमेधिकम् ॥
हयमूर्धा तत्र विष्णुस्तन्मूर्धानः सुरा अपि ।
सोमतीर्थमिति ख्यातं यत्र सोमेश्वरः शिवः ॥
तत्सोमतीर्थमाख्यातमाग्नेयं पुनरस्तु यत् ।
तस्मादाग्नेयमाख्यातमादित्यं तदनन्तरम् ॥
तस्मादादित्यमाख्यातं राहस्यं तदनन्तरम् ।
तत्तीर्थस्मरणादेव ग्रहशान्तिर्भविष्यति ॥
तस्मादप्यपरं तीर्थ- मिन्द्रगोपेन गोपितम् ।
हिमालयश्च तत्तीर्थं महातीर्थं तदुच्यते ॥

(१) अत्र पादत्रयं त्रुटितम् ।

तत्र स्नानञ्च दानञ्च सर्वतीर्थफलप्रदम् ।
एवं सा गौतमी गङ्गा ब्रह्मणाद्रेर्विनिःसृता ॥
यावत्सागरगा देवी तत्र तीर्थानि कानिचित् ।
संक्षेपेण मयोक्तानि रहस्यानि शुभानि च ॥

मात्स्ये—

सप्तगोदावरं तीर्थं सर्वस्यापि सुरेश्वर ।
तत्र श्राद्धं प्रदातव्यमनन्तं फलमीप्सुभिः ॥

वामनपुराणे—

पद्मनाभं समभ्यर्च्य सप्तगोदावरं ययौ ।
तत्र स्नात्वा च विश्वेशं भीमं त्रैलोक्यविश्रुतम् ॥

कालिकापुराणे—

ततो भीमेश्वरं देवं ( ध्यात्वा ) गोदावरी तटे ।
ऋषिभिर्भास्करेणाऽपि यत्र देवो नमस्कृतः ॥
यत्र संतिष्ठते देवी दुष्करं वा महाबला ।
उपहारशतैर्जुष्टा ? शिरैस्तद्गात्रशोणितैः ॥
गोदावरी ततस्तीर्थं स्नात्वाथ तज्जलेऽमले ।
भीमेशञ्च नमस्कृत्य सिद्धं वेटं पुनर्ययुः ॥

इति गोदावरीमाहात्म्यम् ।

## अथ कृष्णवेण्या माहात्म्यम् ।

तत्र प्रशंसा—स्कन्दपुराणे—

ईश्वरं प्रति स्कन्द उवाच

अगस्त्यमुख्यैर्मुनिभिरहं पृष्टोऽभ्यधां कथाम् ।
सर्वसत्त्वविभूतीनां त्वत्प्रसादान्महेश्वर ॥
अथ तैः कृष्णवेण्यास्तु पृष्टं महात्म्यमुत्तमम् ।
अगाधं तत्त्वमज्ञात्वा सर्वज्ञं त्वामुपागताः ॥
शुश्रूषन्ति च सर्वेऽमी पुराणकरणोचिताः ।
मुनयस्तत्प्रसीदेश भिषग्यो भवरोगिणाम् ॥

ईश्वर उवाच

त्वया वै यः कृतः प्रश्नः पुराणमहिमाश्रयः ।
ज्ञातव्यो हि स यत्नेन गूढः सर्वमलापहः ॥
कृष्णेयं विष्णुरूपैव वेद्या तावज्जलात्मिका ।
मत्तः कृष्णाच्च नैवास्याः प्रभावमपरे विदुः ॥
सकृद्यत्पादसंस्पर्शाद्द गङ्गा दुष्कृतमोक्षणा ।
तद्विष्णोस्तु स्वरूपं या सा कृष्णा कथमीड्यते ॥
पृष्टेयं विष्णुना देवदुहितृत्वे तथा विधेः ।
कल्पादौ च कृते जाता पापविध्वंसनाय वै ॥
नदीनामग्रजननी माहात्म्यश्च महत्वतः ।
महदीशमनावापि ख्याता लोके महानदी ॥
तीर्थानि ब्रह्मणा विष्णुरर्थितः प्राहवै नृणाम् १ ।

माहात्म्यं कात्स्न्र्यतो नास्या मादृशैर्ज्ञायते जनैः ॥
कृष्णोपसृष्टा यत्तेन युवती तव यो दिवः ।
सर्वं कर्षति चेद्योऽघं तेन कृष्णा प्रकीर्तिता ॥
अथघोरा राक्षसी रोगकलश्च दुरितानिता ? ।
दौर्मनस्यं परं प्राप्तं पुण्यापुण्यसमागमात् ॥
धर्मस्तु रौद्यौविप्रवेदानावस्त्वसंपदः ? ।
प्रहर्षं परमं जग्मुर्दिवि देवीसमागमात् ॥
यदा कृष्णा भुवं जाता ततः प्रभृति पुत्रकाः ।
अधर्मबुद्धिपूर्वा सा विरुद्धा लोकनाशनी ॥
एवमेषा जगन्माता सर्वा पुण्यमयी शुभा ।
सर्वकृष्णात्र संबन्धी सर्वापुरः सरात्मिका ॥
सर्वैश्च भगवन्मूर्तिस्तीर्थभेदान्वितापि हि ।
नैषा क्षेत्रबलात्तीर्थे नैषा दैवतसन्निधौ ॥
नैषा तिथिबला कृष्णा तीर्थं सर्वैव सर्वदा ।
आदौ मध्ये तथा चान्ते स्पृष्टा पापं नृणां दहेत् ॥
एवं सर्वत्र सततं कृष्णवेण्या च संशयम् ।
यथा गुडमयं पिण्डं सर्वत्र मधुरं भवेत् ॥
एवं विष्णुमयी कृष्णा सर्वत्र सुफलप्रदा ।
कृष्णवेण्योभयतटे योजनान्तरसंस्थितम् ॥
क्षेत्रं विमुक्तिदं प्राहुरन्तरा सह्यसागरम् ।
मासं त्वहरहः स्नात्वा नृपराकफलं लभेत ॥
शीतमासे तथा तत्र षट्पराकफलं लभेत् ।

माघमासे तु संस्नायाद्भक्त्या प्रागुदयाद्रवेः ॥
द्विपराकफलं चैव भक्त्या प्राप्नोति कीर्तिमान्।
संवत्सरं तु यः स्नात्वा सर्वदा नियतेन्द्रियः॥
सर्वान् कामानिह प्राप्य तदन्ते मुक्तिमाप्नुयात्।
कृष्णां गावचतुर्दश्यां (?) श्रवणेन तथा क्षये ॥
विष्णोर्दिनेऽर्कवारे च स्नानं सर्वेष्टसाधनम्।
पौर्णमास्यां च संक्रान्त्यामष्टम्यां चन्द्रसूर्ययोः॥
ग्रहणे स्नानमात्रेण शतक्रतुफलं लभेत्।
श्रवणे वाघ्रनक्षत्रे व्यतीपाते च वैधृतौ ॥
अमावास्यायां कृष्णायां स्नानदानाद्यनन्तकम्।
अयने विषुवे चैव मन्वादिषु युगादिषु ॥
तर्पितास्तत्र पितरः कल्पतुष्टा भवन्ति वै।
दुःस्वप्नो दुर्निमित्तादावग्निपीडा न चैव हि ॥
अमङ्गल्येषु सर्वेषु कृष्णाख्यानं शुभोदयम्।
सौभाग्यदा शान्तिकरी सर्वोपद्रवनाशिनी ॥
न गन्त्रितार्थमायातां ? शरण्यं शरणं व्रजेत्।
कामधेनुं च कृष्णां च सृष्ट्वा ब्रह्मा ददौ पुरा ॥
सुरेभ्यः प्रथमामेतां मर्त्येभ्यस्तु द्वितीयिकाम्।
लब्धापि भारते जन्म कृष्णवेण्यां च ये नराः ॥
मज्जन्ति न च पश्यन्ति शोच्यास्तेपि च पापिनः।
पराशरोपि सुप्रीतः नदीनां ह्यन्तरे वसन् ॥
सह्यपादप्रसूतानामाधिक्यं सर्वतो जगाविति ।

त्रिभिः सारस्वतं तोयं एकाहेन तु यामुनम् ॥
सद्यः पुनाति गाङ्गेयं दर्शनादेव नर्मदा ।
गोदावरीभीमरथीफलावेणादिकं तथा ॥
सह्यपादोद्भवा नद्यः स्मृताः पापभयापहाः ।
स्मरणादेव पापघ्न्य इत्याधिक्यं हि सोऽभ्यधात् ॥
तासां च मध्ये परमा कृष्णावेण्युत्तमोत्तमा ।
कृष्णवेण्या पयःपानाद्भागीरथ्यवगाहनात् ॥
उभयोःसममित्याहुः स्नानं तत्त्रिगुणं भवेत् ।
ख्यातिं तस्याः पुरा विष्णुर्मायया समवावृणोत् ॥
सर्वैरप्यर्थिभिः सर्वदेवदेवो नमस्कृतः ।

ब्रह्मोवाच

अव्रता अनधीयाना अयजानाश्च मानवाः ।
कृष्णायां स्नानमात्रेण यास्यन्ति फलमीप्सितम् ॥
योगाभ्यासं विना मोक्षं धर्मचर्या विना दिवम् ।
प्रायश्चित्तं विना शौचं प्राप्स्यन्ति मज्जनाज्जनाः ॥
न गम्यन्ते च तीर्थानि पापभाग्भिर्नरैः सदा ।
कृष्णवेण्याश्रयबलादिवि लोके व्यवस्थिताः ॥

नारद उवाच

इत्यर्थिते जगत्स्थित्यै तस्या माहात्म्यमावृणोत् ।
यथा जना न जानन्ति न श्रद्दधति पूर्ववत् ॥

सप्तं जयति तीर्थानि पापेभ्यश्चातिबिभ्रति ।
वर्द्धयन्ति च सन्मार्गं तथैवं मोहमातनोत् ॥
पुनर्जनानां कारुण्याद्वर्षे द्वादशमे हरिः ।
ख्यातिं प्रकटयत्यस्या गुरौ कन्याश्रिते प्रभुः ॥
तदा सर्वाणि तीर्थानि कृष्णायामवगाह्य वै ।
अघनाशनसामर्थ्यं प्राप्नुवन्ति पुनः पुनः ॥
तदा मोहव्यपगमात्सर्वे श्रद्धासमन्विताः ।
सेवने मज्जने कृष्णाः कृतार्थाश्च भवन्ति ते ॥
अन्यदा चैव मन्यन्ते नदीसामान्यदर्शनात् ।
नरकं यान्ति मोहाच्च माहात्म्यं हि सदा मम ॥
सर्वेषां मोक्षमालोक्य तथाहं प्रेरितैः सुरैः ।
तत्कार्यं कृतवान् तस्मान्नास्य तत्त्वं विदुर्जनाः ॥
महात्मानस्तु सततं वीतमाया हरिप्रियाः ।
भजन्ति श्रद्धया कृष्णां मुच्यन्ते ते शुचैनसा ॥
महापातकजान् दोषान् नाशयित्वा सुमोक्षदा ।
स्नानमात्रेण चैवेयं कृष्णा वेणी महानदी ॥
तस्मादाजन्ममरणं कृष्णायामेव संवसेत् ।
तस्या हि दर्शनात् स्पर्शात्पापेभ्यश्चापि मुच्यते ॥
नियमेनात्र वस्तव्यं विरक्तेन च धीमता ।
रागाः पुंसां प्रकुर्वन्त्यनर्थं लभतेऽधिकम् ॥
पुण्यवृद्धिरिवात्यर्थं पापवृद्धिरिवाधिका ।
तस्माद्विभीतः पापेभ्यः प्रयतः सर्वदा वसेत् ॥

अथ स्नात्वा तु पापानि देवीं नित्यं क्षमापयेत् ।
सायं प्रातःशुचिर्नत्वा नैव पापमवाप्नुयात् ॥
अज्ञानाद्यदि वा ज्ञानादेनश्चारितं त्वयि ।
तत्त्क्षमस्वाखिलं देवि जगन्मातर्नमोस्तुते ॥
एवं भक्तियुतो देव्यां तादृशः कश्चन स्पृशेत् १ ।
कृष्णावेणी नदी यत्र यत्र गच्छति पुण्यदा ॥
स्नातस्य तत्र तत्रैव शतयज्ञफलं लभेत् ।
पौर्णमास्याममावस्यामष्टम्यां चन्द्रसूर्ययोः ॥
ग्रहणे स्नानमात्रेण गोसहस्रफलं लभेत् ।
तपो दानं तथा होमः श्राद्धं सद्गुरुसेवनम् ॥
अक्षय्यं लभते तद्यं पावनं च तथा भवेत् ।
नदीनामुत्तमा वेणी देवानामुत्तमो हरिः ॥
कृष्णावेण्या जलं पीत्वा कुत्सितं किं करिष्यति ।
यो वसेन्मासपर्यन्तं न दोषस्तस्य विद्यते ॥
निद्रामात्रं प्रकुर्वन्ति यदि तत्तीरवासिनः ।
प्राणिनां यावतां पुण्यं लभन्ते वार्षिकं फलम् ॥
नदीनामपि भूतेयं माधवेन किल स्वयम् ।
ये वै पिबन्ति तत्तोयं ते नराः पुण्यभागिनः ॥
कृष्णावेणी नदीनाम उद्भूता सह्यपर्वते ।
सृष्टा या ब्रह्मणा पूर्वं प्रजापापनिवृत्तये ॥
संसेव्या देवऋषिभिस्त्रैलोक्यहितकारिणी ।
कुलकोटिजमेषां तु पापं नाशयति क्षणात् ॥

अथ कृष्णवेण्या उत्पत्तिः—

कल्पाद्यस्य कृतस्यादावियं दिव्यवसत्पुरा ।
वैष्णवी ब्रह्मणः पुत्री पूज्यमाना सुरर्षिभिः ॥
तदा पुण्यमयी सृष्टिः सर्वे वै सुधियो जनाः ।
तदा समानाः सर्वे च नोत्तमाधममध्यमाः ॥
तेषां स्वाभाविकी सिद्धिर्ह्लादिनी हि वसोःस्वसा ? ।
अथ कालस्वभावोत्थपापविन्दुसमागमात् ॥
तेषां मिथस्तु संघर्षे सिद्धिर्नष्टा रसोन्लसात् ? ।
अत्रान्तरे जगत्स्थित्यै धर्मो जातश्चतुर्वपुः ॥
सर्वाघशान्त्यै जगतां तदर्थं सा हि निर्मिता ।
पितामहेन च पुनः पुण्यतीर्थान्यनेकशः ॥
भूयश्च कतिपतान्येव त्वत्तोऽस्ति जगतः स्थितिः ।
एवं ज्ञात्वाथ कृष्णोथ निवेद्य ब्रह्मणोऽखिलम् ॥
कार्यं लेभे ततः कृत्स्नं बहुमानात्समर्पितम् ।
ब्रह्मणा सर्वदेवैश्च सत्कृतो भगवाँस्तदा ॥
तामादाथ ययौ कृष्णः पूज्यमानः सुरोत्तमैः ।
ब्रह्मा विष्णुस्तथा रुद्रः सर्वे देवा महर्षयः ॥
सोभ्याहनानयं ? तस्मान्मनुयुग्ममथाब्रुवन् ।
कस्मिन्देशे तु देवीति मन्त्रयन्तः परस्परम् ॥
गच्छन्तो ददृशुस्तत्र महात्मानं तपस्विनम् ।
ते ऊचुर्मुनयः कस्त्वं किमिच्छसि वृणीष्व तत् ॥
देव्यागमाऽह्न्येवास्मिन् देयं यस्य यदीप्सितम् ।

तच्छ्रुत्वा सोथ कृष्णात्मा तान्प्रणम्य कृताञ्जलिः ॥
कृष्णा कृष्णां च तां प्राह सह्याद्रिचलमासुराः ।
देवरोमा च तच्छ्रुत्वा समाराधयितुं स्थितः ॥
मत्तः प्रवर्ततामेषा साक्षाद्विष्णुस्वरूपिणी ।
अस्याः पुण्यजलस्पर्शादहमाप्स्यामि मान्यताम् ॥
मन्यतामपि लोकेऽतस्तीर्थमात्रं हि गौरवात् ।
तच्छ्रुत्वा हर्षितैर्देवैर्वीक्षितेयं महानदी ॥

कृष्ण उवाच

एवमस्तु गिरिश्रेष्ठ त्वयि संभवसाम्यहम् ।
सुता च ते भविष्यामि सह्यजेत्यभिविश्रुता ॥
एतच्च मे प्रियतरं कीर्तिस्तेऽपि भविष्यति ।
नद्यश्चान्या मदनुजाः सर्वनद्युत्तमोत्तमाः ॥
त्वत्त एव जनिष्यन्ति वरान्मे भूधरोत्तम ।
सोपि प्रसाद इत्युक्त्वा प्रणम्य मुदितो गिरिः॥
कृष्णामादाय वै देवैः सहितः स्वपदं ययौ ।
नरो नारायणश्चापि हरिश्चापि समागताः ॥
अन्ये च तत्र तत्रस्थाः सिद्धविद्याधरोरगाः ।
समेता ह्यतिहर्षेण प्रश्नं ? कृत्वा महोत्सवम् ॥
कृष्णां प्रशंसतां हर्षादृषीणां पितॄणां तथा ।
सुराणां चैव सिद्धनां तथैवाप्सरसां तथा ॥
अहो कृतार्थाः मनुजा एव कृष्णोखिले तथा ।
सा कामधेनुरायाता भूर्लोकात्संशुभा कृता ॥

वयं च धन्या मनुजैः कृष्णायामथ तर्पिताः ।
हव्यैः कव्यैः प्रभूतैश्च प्राप्स्यामो निर्वृतिं पराम् ॥
लभ्यते सकृदप्यत्र यदि कृष्णाजलाञ्जलिः ।
तर्हि नो नित्यतृप्तानां किंधनं सुधया च किम् ॥
अहो अलंकृता पृथ्वी सुप्रता च भविष्यति ।
प्रवाहेनाऽमलेनास्याः सर्वामङ्गलहारिणा ॥
सभाग्यास्ते नरा लोके देवोद्देशाः शुभोदयाः ।
तान्येव पुण्यक्षेत्राणि यत्र कृष्णा भविष्यति ॥
स्वर्गा विस्तारमेष्यन्ति संकोचं नरकानि च ।
इयं हि स्वर्गनिःश्रेणी सुलभास्मिन्निरन्तरम् ॥
भविष्यति न सन्देहः कृष्णातीरेषु सर्वदा ।
नरस्तु जङ्गमत्वेन स्थाणुत्वेनापि वा पुनः ॥
अतस्त्वां न जगन्नाथो विष्णुः कृष्णां प्रहर्षयन् ।
शृण्वतां सर्वदेवानां प्राह वीक्ष्य गिरं च ताम् ॥

श्रीकृष्ण उवाच ।

अहमत्र निवत्स्यामि श्वेताश्वत्थे सदा मुदा ।
देवी नदी पुण्यजला निष्णाता च शुभावहा ॥
इत्युक्त्वा भगवान् विष्णुः श्वेताश्वत्थोऽभवत्स्वयम् ।
सूर्यात्तस्य तु सा देवी तोयधाराऽभवत् क्षणात् ॥
ततो जयजयेत्युच्चैः शृण्वत्सु विबुधादिषु ।
हर्षान्नृत्यत्सु कुसुमैः प्रससार महानदी ॥
देवदुन्दुभयो नेदुः पुष्पाणि मुमुचुर्घनाः

गन्धर्वाश्च जगुर्हर्षात् कृष्णोदयमहोत्सवे ॥
सोथ कृष्णा मुनिर्देवी प्रहर्षः पुरतो ययौ ।
मुनिसङ्घवृतः श्रीमान् अन्ये ये च महासुराः ॥
इति जगदघनाशनी सुकृष्णा
धवलवपुर्धरणीं विभूषयन्ती ।
त्रिभुवनदुरितानि तर्जयन्ती
स्वजनविभवेन जगाम पूर्वम् ॥
स्नानकाले च सततं मन्त्रैः संप्रार्थयेदिति ।

अथ स्नानमन्त्राः ।

सह्यपादोद्भवा देवी श्रीशैले तुङ्गगामिनी ॥
कृष्णवेणीति विख्याता सर्वपापप्रणाशनी ।
सह्यपादोद्भवा देवी कृष्णवेणीति विश्रुता ॥
सर्वपापविशुद्ध्यर्थं स्नास्ये देवि तवाम्भसि ।
प्रसीद मे देवि सदामरेन्द्र-
देवेशसृष्टावगता विविक्ते ॥
स्नानेन यस्यामवधूय पापं
प्राप्नोति विष्णोः पदमेव मर्त्यः ॥
रसेन ब्रह्मामृतसन्निभेन
पूर्णामिमां सर्वजना हि मेनिरे ।
तत्त्वावगाहामि सदा तु कृष्णे
देवानृषींस्तर्पयिष्ये पितॄँश्च ॥

इति स्नानमन्त्राः ।

एवं संप्रार्थ्य सततं स्नानादिञ्च समाचरेत् ।
अर्घांश्च प्रक्षिपेत्पश्चात् द्रव्याण्यभिमुखं स्मरेत् ॥
सर्वपापं विनिर्धूय याति विष्णोः पदं द्विजः ।
नियतः कृष्णवेण्यां यो ब्रह्मभूयाय कल्पते ॥

इत्यादि माहात्म्यमनन्तशक्तेः
शिवो गुहायाह स वै ऋषिभ्यः ।
मया भवद्भ्यः कथितं मुनीन्द्राः
तथा भवन्तोपि वदन्तु सद्यः ॥

आख्यानमेतत्परमं पवित्रम्
यः श्रावयेद्भक्तिमतो द्विजाग्र्यान् ।
स सर्वपापानि विधूय विष्णोः
परं पदं याति तथैव शृण्वन् ॥

क्षिणोत्वशेषं मलमान्तरं नः
प्रशस्तशान्तिं मनसः प्रदेयात् ।
एनस्त्वशेषाणि जयत्वसौ नः
श्रीकृष्णवेण्याः सततप्रसङ्गः ॥

इत्यादिदेव्या माहात्म्यं नारदो नैमिषर्षयः ।
शृण्वन्तः कृष्णमनस्तं मुनिं पर्यपूजयन् ॥
ततः प्रभृति सर्वे च कृष्णवेणीं समाश्रिताः ।
श्रद्धया परयोपेताः सिद्धिं प्रापुश्च शाश्वतीम् ॥

अथ कृष्णवेणीतीर्थानि

तथा—

कृष्ण उवाच

तथाप्यतीव पुण्यानि तीर्थानि च पदे पदे ॥
तत्संबंधिसंबन्धीनि पुण्याः सर्वे वसन्ति वै ।
तथाप्यतीव पुण्यानि तत्र सूक्तानि वै पृथक् ॥
तथास्याः पुण्यनद्यश्च दिव्यतीर्थानि सन्ति वै ।
तेषां माहात्म्यमतुलमनन्तं गुह्यमुत्तमम् ॥

तथा—

नारद उवाच—

तीर्थानि कृष्णवेण्यां तु असंख्यातानि सन्ति वै ।
प्राधान्यं तु प्रवक्ष्यामि गुह्याद् गुह्यतमानि च ॥
पदे पदे च तत्तीरे तीर्थानि प्रभवन्ति वै ।
तेषां नाम प्रभेदेन चक्रुर्ज्ञात्वा च तत्त्वतः ॥
न समर्थोस्मि लोकेस्मिन् विना तस्मात्पितामह ।
सह्याद्रेरुत्तमं शृङ्गं तत्र ब्रह्मगिरिः स्मृतः ॥
यत्र ब्रह्मा तपस्तप्त्वा लेभे च स्वपदं हरेः ।
तस्माद्दक्षिणतो विप्रा रम्यो वेदगिरिः स्मृतः ॥
यत्र वेदाः स्वदारैश्च मूर्त्तितः सर्वदा स्थिताः ।
तयोर्मध्ये महातीर्थं पुण्यमामलकं स्मृतम् ॥
यत्रामलकवृक्षो ऽसौ धन्यैरेव प्रदृश्यते ।
तस्य मूलात्समुद्भूता वेणी नाम नदी शुभा ॥

तस्मिन्प्रदेशे तन्मूलात् कृष्णा देवसमुद्भवा ।
तत्रादौ विष्णुतीर्थञ्च पापिनामतिदुर्लभम् ॥
तत्र स्नात्वा सकृन्मर्त्यः सारूप्यञ्च लभेद्धरेः ।
अमावास्यागुरोर्वारे स्नानं मुक्तिप्रसाधनम् ॥
दृष्ट्वापि तत्सकृन्मर्त्यः कृतकृत्यो न संशयः ।
ततः क्रमाद्रुद्रतीर्थं ब्रह्मतीर्थञ्च दुर्लभम् ॥
तत्र स्नात्वा वसेत्कल्पं पुरोक्तविविधं ययोः १ ।
ततश्च सङ्गवेणी या सर्वसिद्धिकरी नृणाम् ॥
येनेयं कृष्णवेणीति सर्वलोकेषु गीयते ।
कृष्णाज्ञया जगच्छान्त्यै ब्रह्मणा निर्मिता पुरा ॥
वेणी च कृष्णया युक्ता महतीं ख्यातिमाप च ।
ततः ककुद्मिनीं सङ्गे कृत्वास्या वारुणं जपम् ॥
गायत्र्यष्टशतं वापि मुच्यते सर्वपातकैः ।
शिलीभूतं महाकायं राक्षसं दुष्टचेष्टितम् ॥
भित्त्वा धाराभिरुग्राभिः कालिकाले रता द्विजाः ।
यत्र निःसारतां यान्ति तत्र तीर्थं महाफलम् ॥
ऋषयो राजऋषयः सुरा गन्धर्वकिन्नराः ।
स्वपदं प्राप्तवन्तस्ते तत्र स्नानाद् द्विजोत्तमाः ॥
सर्वस्य पापजातस्य नरश्चेदिच्छति क्षयम् ।
विधातुः सततं यागात्कृष्णावेणी महानदी ॥
कृष्णवेण्योभयतटे योजनान्तरसंस्थितम् ।
क्षेत्रं विमुक्तिदं प्राहुरन्तरा सह्यसागरम् ॥

ग्रामे वा यदि वारण्ये तीर्थे वा यत्र तत्र च ।
कृष्णवेणाम्भसि स्नातो वाजिमेधफलं लभेत् ॥
षष्ठिवर्षसहस्राणि भागीरथ्यवगाहनम् ।
कृष्णवेण्यां सकृत्स्नानं समं कन्यागते गुरौ ॥
कन्यागते गुरौ सोमे वारे विष्णोः शुभे दिने ।
वेण्यां त्रिसवनं नृणां कोटिजन्माघनाशनम् ॥
कृष्णायां कृष्ण(भ)वने ऋक्षे वै चरुवैष्णवे ।
कन्यागते गुरौ सोमे सप्तकोट्यघनाशनम् ॥
ऋणत्रयस्य चेत्तूर्णं पितृमातृनृणं तथा ।
अनपाकुर्वतो देवान्साधोः कृष्णापरायणम् ॥
तस्या हि तीर्थप्रवरं संगमं लोकविश्रुतम् ।
स्नानमात्रेण वै पुंसः सर्वपापप्रणाशनम् ॥
नदीनामादिभूता सा कामधेनुरियं स्वयम् ।
ये पिबन्ति च तत्तोयं नरास्ते पुण्यभागिनः ॥
पदे पदे च तत्रैव तीर्थानि प्रभवन्ति च ।
तेषां नामप्रभेदेन चक्रुर्ज्ञातुं च तत्त्वतः ॥
न स धर्मस्त्रिलोकेऽपि तथापि प्रस्तुतं त्विह ।
वक्ष्यामि शृणु मद्भक्त्यात्सर्वपापनिवृत्तये ॥
मलापहारिणी नाम नदी सह्यसमुद्भवा ।
निर्मिता वरकन्याणी ब्रह्मणा पापशान्तये ॥
तस्यास्तु सलिलं सद्यः पापं हरति किल्बिषम् ।
तदाश्रयास्तु ये मर्त्याः प्रयान्ति परमां गतिम् ॥

तथास्याः संगमं गच्छेत्पवित्रं पापनाशनम् ।
रुद्रं पशुपतिं स्थाणुं तत्र स्नात्वा नमस्कुरु ॥
मृगरूपं परित्यज्य ऋषित्वं प्राप्स्यसि ध्रुवम् ।
यदा तदा च तत्रैव स्नानं दानं च संगमे ॥
मनुष्यलोके ये मर्त्याः कीर्तयन्ति च संगमम् ।
प्रयान्ति नूनं ते मोक्षं ज्ञानशक्त्यादिभिर्विना ॥
अहो धन्यतरा मर्त्याः कीर्तयन्ति सुसंगमम् ।
स्मरन्ति परमं स्थानं नूनं ते मोक्षभागिनः ॥
इति देवाश्च पितरो गायन्ति सततं दिवि ।
तस्मादगम्यं तत्तीर्थं पापिनां दुर्मनस्विनाम् ॥
दानरूपेण तत्रैव तिलान्यो वै प्रयच्छति ।
मेरुतुल्यं फलं प्राप्य तदन्ते मुक्तिमाप्नुयात् ॥
अणोरणुतरं पापं तत्र कृत्वा नराधमाः ।
ब्रह्माण्डसदृशं दुःखं प्राप्नुवन्ति सुदुःसहम् ॥
अन्यत्र यत्कृतं पापं संगमे नश्यति क्षणात् ।
तत्रैव यत्कृतं पापं न तदन्यत्र नश्यति ॥
तद्रूपं च फलं भुङ्क्ते कल्पकोटिशतैरपि ।
कृमित्वं स्थावरत्वं च गच्छन्ति च न संशयः ॥
क्रोशमात्रे तु विस्तीर्णे संगमे क्षेत्रमुत्तमम् ।
तत्र स्नात्वा महानद्यां गोसहस्रफलं लभेत् ॥
तत्रापि संगमे स्नानमुत्कृष्टं द्विजसत्तमाः ।
अश्वमेधसहस्राणां फलं प्राप्नोति मानवः ॥

ब्रह्महत्यादिभिः पापैस्तथा चैवोपपातकैः ।
विमुक्ताः स्नानमन्त्रेण मर्त्या यान्ति परं पदम् ॥
तत्र पिण्डप्रदानेन मुक्तिरेव न संशयः ।
पिण्डमात्रप्रदानेन विघ्नाः शान्तिं प्रयान्ति वै ॥
व्याधयश्चोपशान्ताः स्युरैश्वर्यं कामजं भवेत् ।
सगरश्च तिलापश्च ययातिर्नहुषस्तथा ॥
भागीरथोऽथ रामश्च मान्धातृप्रमुखास्तथा ।
असितो देवलश्चैव दत्तात्रेयपुरोगमाः ॥
तत्र स्नात्वा तपः कृत्वा मुक्तिज्ञानपदे स्थिताः ।
अन्ये च ऋषयो देवास्तत्र तिष्ठन्ति निश्चिताः ॥
रामपुत्रो जगन्नाथो भार्गवः क्षत्रियस्तथा ।
तत्र कृत्वा तपो घोरं पापस्यान्तं प्रपन्नवान् ॥
सूर्यारश्चमहेन्द्रस्य संगमत्रयमुत्तमम् ।
त्रिषु स्थानेषु देवेशो रामस्तिष्ठति सर्वदा ॥
प्रातःकाले तु सूर्याहे पराह्णे तु सुसंगमे ।
रात्रौ महेन्द्रो वसति रामः क्षत्रकुलान्तकः ॥
अतस्त्रयं महापुण्यं रामस्यैव मत्रयम् ? ।
पृथिव्यामन्तरिक्षे च यानि तीर्थानि सन्ति वै ॥
तानि तत्र वसन्त्येव धातुर्वचनकारणात् ।
तत्र स्नात्वा नमस्कुर्यान्नामभिः शाश्वतं शिवम् ॥
माघमासे नरः स्नात्वा कार्तिके मासि सुव्रत ।
शिवस्य सन्निधौ स्तोत्रं यः पठेच्छिवमाप्नुयात् ॥

सोऽपि ब्रह्मपुरं गत्वा शान्तिमाप्नोति शाश्वतीम् ।

इति कृष्णवेणीमाहात्म्यम् ।



## अथ नर्मदामाहात्म्यम् ।

तत्र प्रशंसा-कूर्मपुराणे

युधिष्ठिर उवाच

श्रुतास्तु विविधा धर्मास्त्वत्प्रसादान्महामुने ।
माहात्म्यं तु प्रयागस्य तीर्थानि विविधानि च ॥
नर्मदा सर्वतीर्थानां मुख्या वै भवतेरिता ।
तस्यास्त्विदानीं माहात्म्यं वक्तुमर्हसि सत्तम ॥

मार्कण्डेय उवाच

नर्मदा सरितां श्रेष्ठा रुद्रदेहाद्विनिर्गता ।
तारयेत्सर्वभूतानि स्थावराणि चराणि च ॥
नर्मदायाश्च माहात्म्यं पुराणे यन्मया श्रुतम् ।
इदानीं तत्प्रवक्ष्यामि शृणुष्वैकमना नृप ॥
पुण्या कनखले तीर्थे कुरुक्षेत्रे सरस्वती ।
ग्रामे वा यदि वारण्ये सर्वत्रैव तु नर्मदा ॥
त्रिभिः सारस्वतं तोयं सप्ताहेन तु यामुनम् ।
सद्यः पुनाति गाङ्गेयं दर्शनादेव नर्मदा ॥

वायुपुराणे—

पितॄणां तु हिता पुण्या नर्मदा सरितां वरा ।
तत्र श्राद्धानि दत्तानि ह्यक्षयानि भवन्ति वै ॥

मत्स्यपुराणे—

नर्मदायास्तु राजेन्द्र पुराणे यन्मया श्रुतम् ।
तत्र तत्र नरः स्नात्वा अश्वमेधफलं लभेत् ॥
सरस्वत्यां च गङ्गायां नर्मदायां युधिष्ठिर ।
समं स्नानं च दानं तथा मे शंकरोऽब्रवीत् ॥
नर्मदाया जलं पुण्यं फलोर्माभिः ? समायुतम् ।
पवित्रं शिरसा वन्द्यं सर्वपापप्रमोचनम् ॥
नर्मदा सर्वतः पुण्या महापापापहारिणी ।
अहोरात्रोपवासेन मुच्यते ब्रह्महत्यया ॥
एवं पुण्या च रम्या च नर्मदा पाण्डुनन्दन ।
त्रयाणामपि लोकानां पुण्या सेयं महानदी ॥
नर्मदा तु महाश्रेष्ठा पुण्या पुण्यतमा हि सा ।
मुनिभिश्च महाभागैर्विभक्ता धर्मकाङ्क्षिभिः ॥
यज्ञोपवीतमात्राणि प्रविभक्तानि पाण्डवः ।
तेषु स्नात्वा तु राजेन्द्र सर्वपापैः प्रमुच्यते ॥
नर्मदासेविनां येषु रुद्रदेहाद्विनिःसृता ।
तारयेत्सर्वभूतानि स्थावराणि चराणि च ॥
सर्वदेवाधिदेवेन ईश्वरेण महात्मना ।
कथिता ऋषिसङ्घेभ्यस्त्वस्माकं तु विशेषतः ॥

